CASIO

# सुर के परदों पर हाथ फिराओ मस्ती में झूम-झूम जाओ

मनचाहे संगीत का केसियो पर आनंद उठाएं... बस परदों पर हाथ घुमाएं

लय की धुन पर बजाओ मनपसंद गीत ...और देखो, कैसे थिरकते हैं प्यारे तुम्हारे मीत!

तो आओ, केसियो की संगीतमय खूबी का असली आनंद उठाओ... सचमुच इसका जवाब कहीं न पाओ!



**SA-20**

● 32 मिनी की वाले ● 100 पी सी एम पहले ही सेट किए टोन ● 19 पी सी एम ऑटो रिद्म ● 13 "सुपर अकम्पनीमेंट" बेकिंग पैटर्न ● पहले सेट किए गए प्रदर्शन ट्यून ● दुहेरी स्पीकर सिस्टम



**PT-380**

● 32 मिनी की वाले ● 100 पी सी एम पहले सेट किए गए टोन ● 12 पी सी एम ऑटोरिद्म ● मिनी माइक्रोफोन के साथ ● आर ओ एम पैक कंपेटिबल ● मेलोडी गाइड फ़ंक्शन ● 5 बिल्ट-इन साउण्ड इफेक्ट पैड

**CITY MUSIC CO., PTE LTD.**
Singapore Tel 3377058, 3377545

**ONFLO MUSIC CO., LTD.**
Hong Kong Tel: 722 4195

**RAINBOW PHOTO FINISHERS PTE LTD.**
Nepal, Kathmandu Tel: 221724

**GENERAL ENTERPRISES COMPANY**
U.A.E., Dubai Tel: 224131/2/3

**MAHMOOD SALEH ABBAR CO.**
Saudi Arabia, Jeddah Tel: (02)6473995

**ARABIAN CAR MARKETING CO.,LTD.**
Oman Tel: 793741

**CASIO COMPUTER CO., LTD.**
Tokyo, Japan

कविहृदयम्–

# गृहे भवतु संस्कृतम्

"शंसन्ति संस्कृतगिरं परिषत्सु सर्वे
सम्प्रेरयन्ति पठितुं परान् अजस्रम्।
किन्तु स्वयं न हि बुधा निजपुत्रपौत्रान्
पुत्रीश्च संस्कृतमहो खलु पाठयन्ति॥"

इत्थं समस्तविदुषां विषये प्रवादो
भूयानयं प्रचलितोऽस्त्यधुना समाजे।
तस्मात् बुधैस्तदयशःपरिमार्जनाय
यत्नो विधेय इति नः प्रतिभाति युक्तम्॥

अद्यापि सन्ति कतिचित् विबुधा ध्रुवं ये
स्वां सन्ततिं सुरगिरं खलु पाठयन्ति।
सङ्ख्या परन्तु खलु तादृशपण्डितानां
नो भूयसीति विदितं विदुषां समेषाम्॥

आयान्तु संस्कृतजना न वसन्तु तूष्णीं
शैथिल्यदोषमपनीय भवन्तु सज्जाः।
आपूरयन्तु च निजं भवनं कुटुम्बं
क्षेत्रं जगच्च सकलं सुरवाङ्निनादैः॥

यस्मिन् गृहे न खलु गर्जति देववाणी
यस्मिन् गृहे न खलु गुञ्जति देववाणी।
यस्मिन् नं गायति न नृत्यति देववाणी
तत् कीदृशं नु भवनं खलु पण्डितस्य?॥

– वासुदेवद्विवेदी शास्त्री, वाराणसी

सरलया शैल्या श्लोकेषु भावः प्रकाशितः अस्ति खलु कविना? अतः एतेषां पुनर्विवरणम् अनावश्यकम् एव। एषः विषयः सर्वैः सर्वत्र प्रसारणीयः इत्यस्ति कवेः आशयः।

# 'प्रत्यक्षः' 'विशेषः' च।

शिष्यः- श्रीमन्! 'देवः प्रत्यक्षः अभवत्' इति प्रयोगः करणीयः, उत 'देवः प्रत्यक्षम् अभवत्' इति?

आचार्यः- उभयथा अपि प्रयोगः शक्यः। यतः एकत्र प्रत्यक्षपदं कर्तुः विशेषणम्। अत एव विशेष्यनिघ्नः। अपरत्र तत् क्रियाविशेषणम्। अतः तस्य नपुंसकलिङ्गद्वितीयैकवचनम्।

शि - मया भवतः कथनं सम्यक् न अवगतम्।

आ - 'देवः प्रत्यक्षः अभवत्' इत्यस्मिन् वाक्ये प्रत्यक्षः इति पदं कर्तृपदस्य देवस्य विशेषणम्। विशेष्यानुगुणं ये शब्दाः पुस्त्वं, स्त्रीत्वं, नपुंसकत्वं वा प्राप्नुवन्ति ते विशेष्यनिघ्नाः इति उच्यन्ते। विशेष्यस्य निघ्नाः-अधीनाः ते इति शब्दार्थः।

शि - विशेष्यानुगुणं त्रिषु लिङ्गेषु भिन्नं रूपं यानि पदानि प्राप्नुवन्ति तानि विशेष्यनिघ्नपदेन उच्यन्ते। यथा – चतुरः/चतुरा/चतुरम्, उत्तमः/उत्तमा/उत्तमम्, सुन्दरः/सुन्दरी/सुन्दरम् इत्यादयः।

आ - आम्। 'देवः प्रत्यक्षम् अभवत्' इत्यत्र क्रियाविशेषणत्वं वक्तव्यम्। 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च' इति वैयाकरणानां वचनम्।

शि - उभयत्र अपि प्रत्यक्षपदस्य विग्रहवाक्यं कथं प्रदर्श्यते?

आ - यत्र क्रियाविशेषणत्वं तत्र 'अक्षिणी प्रति (अक्ष्णोः अभिमुखम् इत्यर्थः) यस्मिन् कर्मणि तद्यथा भवति तथा' इति विग्रहवाक्यं वक्तव्यम्। प्रत्यक्षः इत्यत्र तु 'प्रत्यक्षम् अस्य अस्ति*' इति विग्रहवाक्यम्। तदा 'देवः प्रत्यक्षः अभवत्' इत्यस्य वाक्यस्य 'देवः प्रत्यक्षवान् अभवत्' इति तात्पर्यं सिध्यति।

शि - श्रीमन्, 'देवः प्रत्यक्षम् अभवत्' इत्येव प्रयोक्तव्यम्, 'देवः प्रत्यक्षः अभवत्' इति प्रयोगः सर्वथा अनुचितः इति केनचित् विदुषा एव अहम् अनुरोधपूर्वकं बोधितः खलु?

---

* 'अर्शआदिभ्योऽच्' (५.२.१२७) इति मत्वर्थे अच्प्रत्ययः।

आ - यः भवन्तं तथा बोधितवान् तस्य आशयः वस्तुतः कः आसीत् इति न ज्ञातं मया। मुखतः वार्तालापात् एव ज्ञायेत स च आशयः। तत् आस्तां तावत्। सिद्धान्तकौमुद्याम् 'अव्ययीभावे शरत्प्रभृतिभ्यः' (५-४-१०७) इत्येतस्य सूत्रस्य विवरणसन्दर्भे प्रत्यक्ष-परोक्षादीनां शब्दानां विषये चर्चा कृता दृश्यते। तत्रैव 'परोक्षा क्रिया' इत्यत्र कथं स्त्रीत्वम् इति प्रश्नम् उद्भाव्य 'अर्शआद्यच्त्वं तत्र' इति समाधानम् अपि उक्तम्। तुल्यन्यायेन प्रत्यक्षशब्दस्यापि विशेष्यनिघ्नत्वम् अङ्गीकरणीयं भवति।

शि - 'परोक्षा क्रिया' इति प्रयोगः दृष्टः इत्यतः परोक्षशब्दस्य अर्शआद्यच्त्वम् अङ्गीकृतम्। प्रत्यक्षशब्दस्य तादृशः प्रयोगः कोऽपि दृश्यते वा?

आ - आम्। 'प्रत्यक्षाभिः प्रपन्नः तनुभिरवतु वस्ताभिरष्टाभिरीशः' (शाकुन्तले-१-१) इति कालिदासस्य प्रयोगः एव श्रूयते। अतः एव 'देवः प्रत्यक्षः अभवत्' इति प्रयोगे कृते न दोषाय इति उच्यते अस्माभिः।

शि - श्रीमन्! एतादृशः एव अन्यः संशयः मम। '...... विशेषव्यवस्था कल्पिता अस्ति' इति प्रयोगः उचितः, उत '..... विशिष्टा व्यवस्था कल्पिता अस्ति' इति?

आ - अत्रापि उभयथा अपि साधुत्वम् एव।

शि - तत् कथं भवति श्रीमन्? विशेषः इति धर्मः, विशिष्टः इति धर्मी। विशेषेण युक्तः भवति विशिष्टः। अतः 'व्यवस्था'पदस्य विशेषणं 'विशिष्ट'शब्दः भवितुम् अर्हति, न तु 'विशेष'पदम्। विशेष-व्यवस्थाशब्दयोः विशेषणविशेष्यभावः कथम्?

आ - भवतः सन्देहः युक्तः एव। किन्तु विशेषशब्दः अपि विशेषणरूपेण (धर्मिरूपेण) प्रयुक्तः दृश्यते। यथा– 'आसीद्विशेषा फलपुष्पवृद्धिः' (रघुवंशे-२-१४) इति कालिदासप्रयोगः। 'विशेष्यते इति विशेषा, कर्मार्थे घञ्प्रत्ययः' इति व्याख्याता मल्लिनाथः अत्र विवरणं लिखति। अतः विशेषव्यवस्था इति प्रयोगे कृते न दोषाय।

शि - हन्त! उज्जीविताः वयम्। यतः अस्माभिः विशेषशब्दः बहुधा विशेषणत्वेन प्रयुज्यते व्यवहारे!

* * * *



# चन्दमामा

जनवरी-१९९१

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– **'चक्रपाणिः'**　　सञ्चालकः– **'नागिरेड्डी'**

**अ**स्माकं जीवनस्य मुखद्वयं– सामाजिकं वैयक्तिकं चेति। उभयविधे अपि जीवने काले काले विभिन्नाः निर्णयाः स्वीकरणीयाः भवन्ति। युक्तायुक्ततानिर्णयार्थं किमपि मानं भवेत् एव खलु? एवं तर्हि पूर्वोक्ते उभयविधे जीवने मानत्वेन किं स्वीकृतम् अस्माभिः? किं च स्वीकरणीयम्?

प्रथमं तावत् वैयक्तिकजीवनविषये चिन्तयाम। वैयक्तिके जीवने धर्मः युक्तायुक्ततानिर्णयस्य मानं स्यात्। धर्मो नाम न मताचारः, सम्प्रदायपालनमात्रं वा। यतोऽभ्युदयनिःश्रेयससिद्धिः सः धर्मः। 'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।' एतादृशः धर्मः एव जीवने निर्णायकनिकषः। किन्तु इदानीं प्रायेण किं दृश्यते? स्वसुखं सर्वस्यापि निर्णायकम् अस्ति। स्वहितं यदि निर्णायकं स्यात् तर्हि इतोऽपि वरं स्यात्। हितसुखयोः महान् भेदः अस्ति। यत् इन्द्रियतृप्तिं जनयति तत् सुखकरं स्यात् नाम, किन्तु तत् हितकरं स्यात् इति न नियमः। यथा – गुडः। गुडः इन्द्रियसुखं जनयेत्। किन्तु उदरस्य हितकरं न। औषधं सुखकरं न स्यात् चेदपि शरीरस्य हितकरम्। अतः, यदि आत्मा एव युक्तायुक्ततानिर्णायकस्य मानं, तर्हि स्वहितं (स्वसुखं न) वा यदि तत् स्यात् तर्हि वरं स्यात्। स्वसुखं मानत्वेन कल्पितं यत् तस्यैव परिणामतः देशे स्वार्थादीनां विजृम्भणं दृश्यते।

सम्पुटः–७　　जनवरी–१९९१　　सञ्चिका–१०

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






# हांग्कांग् नगरम्

महता जनसम्मर्देन युक्तं, तथापि सौन्दर्येण समेतं रमणीयं लघुनगरम् अस्ति हांग्कांग्। एतत् नगरम् इदानीम् आंग्लानाम् उपनिवेशः अस्ति।

एशियाखण्डस्य भूपटस्य दर्शनात् ज्ञायते यत् हांगकांग् चीनादेशस्य एव भूभागः इति। तथापि एतत् आंग्लानाम् उपनिवेशः कथं जातम्? सा च काचित् कथा।

बहुभ्यः वर्षेभ्यः ब्रिटन्तः चीनादेशं प्रति अफीमद्रव्यं प्रेष्यमाणम् आसीत्। किन्तु १९४२ तमे वर्षे चीनादेशे अकस्मात् विदेशात् आनीयमानस्य अफीमद्रव्यस्य निषेधः कृतः। एतेन क्रुद्धेन ब्रिटिश्सर्वकारेण हांग्कांग्द्वीपः स्वायत्तीकृतः।






किन्तु केषाञ्चित् लघुयुद्धानां, बहुविधवार्तालापस्य च अनन्तरं ब्रिटिश्-सर्वकारेण अङ्गीकृतं यत् शतं वर्षाणि यावत् केवलं, हांग्कांग्नगरं वशे स्थाप्यते इति।

१९९७ तमे वर्षे स च अवधिः समाप्तः भविष्यति। एतस्य अवधेः अनुवर्तनं तु चीनादेशः न इच्छति। सः हांग्कांग्नगरं निश्चयेन स्वीकुर्यात् एव।

एषु दिनेषु हांग्कांग्नगरम् कार्य-बाहुल्ययुतेषु नगरेषु अन्यतमम् अस्ति। वाणिज्यकारणतः एतस्मिन् सदा क्रियाशीलता दृश्यते। गगनचुम्बीनि भवनानि, भोगविलासपरं जनजीवनम्, आधुनिकतान्त्रिकतायुक्तता इत्यादिभिः एतत् नगरं चीनस्य प्रधानभूभागादिभ्यः पृथक् एव भासते। साम्यवादसिद्धान्त-विरुद्धं, हांग्कांग्नगरस्य वाणिज्यं किं चीनस्य अधिकारस्य आगमनस्य अनन्तरम् अपि अनुवर्तेत? चीनासर्वकारः वदति यत् इदानीं तत् नगरं यथा अस्ति तथैव अग्रे अपि भविष्यति इति। किन्तु हांग्कांग् नगरीयाः ज्येष्ठाः वणिजः एतस्मिन् विषये विश्वासं न प्रकटयन्ति। अतः बह्व्यः वाणिज्यसंस्थाः स्वकार्यकेन्द्रभूतान् कार्यालयान् सिंग्पुर, बैंग्काक्, टायिपी, मनीला इत्यादीनि नगराणि प्रति नयन्तः सन्ति।



# सत्पात्रे दानं श्रेयसे

मधुपुरनामके ग्रामे रमानन्दः नाम कश्चन दानशीलः निवसति स्म। सः धनिककुले जातः आसीत्। किन्तु पात्रापात्रताम् अविचार्य यथेच्छं दानं निरन्तरं कृतम् इत्यतः सः निर्धनः जातः आसीत्। तस्य बान्धवाः एव तस्मात् प्रभूतं धनं दानरूपेण प्राप्तवन्तः आसन्। रमानन्दस्य इदानीन्तनाम् अवस्थां ते बान्धवाः सर्वे अपि जानन्ति स्म एव। तथापि ते साहाय्यार्थम् अग्रे न आगतवन्तः। प्रत्युत ते रमानन्दविषये अपप्रचारं कृतवन्तः।

केचन बान्धवाः उक्तवन्तः यत् महादाता इति कीर्तिः प्राप्तव्या इति उद्देशेन रमानन्देन फलम् अविचिन्त्य बहुधा दानं कृतम्, अतः एषा स्थितिः इति।

अन्ये केचन उक्तवन्तः यत् रमानन्देन अन्याय्येन वञ्चनादिना च धनं सम्पादितम् आसीत्, अतः एषा गतिः इति।

इतरे केचन उक्तवन्तः यत् रमानन्दस्य मनः दुर्गुणयुक्तम् अस्ति, अतः अधःपतनं जातम् इति। 'रमानन्दस्य साहाय्यं यः करोति सः अपि दुर्गतिं प्राप्स्यति' इत्यपि वदन्ति स्म ते।

रमानन्दस्य आत्मीयेषु केचन साहाय्यं कर्तुम् इच्छन्ति स्म। किन्तु रमानन्दबान्धवानां दुष्प्रचारं श्रुत्वा ते निरुत्साहं प्राप्य अग्रे न गतवन्तः एव।

एतादृश्यां स्थितौ एतस्मिन् ग्रामे स्थितिः अनुचिता इति आलोच्य रमानन्दः दूरस्थं ग्रामं प्रति पत्नीपुत्रादिभिः सह प्रस्थितवान्। प्रयाणे ते सर्वे कुत्रचित् वृक्षस्य अधः विश्रान्त्यर्थम् उपविष्टवन्तः। बालाः अल्पेन एव कालेन निद्रावशं गताः।

पत्नी खेदेन रमानन्दं उक्तवती– "वयं बान्धवानां विशेषसाहाय्यं कृतवन्तः।



कस्यापि अपकारः न कृतः अस्माभिः। तथापि बान्धवाः एवं दुष्प्रचारं किमर्थं कुर्वन्ति इति न ज्ञायते" इति।

तदा रमानन्दः हसन् उक्तवान्– "एतस्यां दुःस्थित्यां बान्धवैः साहाय्यं करणीयम् इति भवती अपेक्षते। किन्तु बान्धवाः– 'एतत् दायित्वम् अस्माकम् उपरि आपतेत्' इति भावयन्तः अपप्रचारं कुर्वन्तः सन्ति। ते अस्मत्तः स्वीकरणं केवलम् इच्छन्ति, न तु अस्माकं साहाय्यम्। अतः एतादृशानां कृतघ्नानां विषये चिन्तनम् अपि पापाय। इदानीं भवती चिन्तां परित्यज्य सुखेन निद्रां करोतु" इति।

दीर्घं निःश्वसती रमानन्दपत्नी अल्पे एव काले निद्रां प्राप्तवती। रमानन्दः अपि निद्रां प्राप्तवान्।

निद्रावस्थायां तेन स्वप्ने कश्चन संन्यासी दृष्टः। तेन संन्यासिना उक्तम्– "भोः, पात्रापात्रताम् अविचार्य भवता यत् दानं कृतं तेन भवता एतादृशी गतिः प्राप्ता। किन्तु भवता सम्पादितं पुण्यं तु व्यर्थं न। तच्च ताम्राङ्गुलीयकरूपेण एतस्य वृक्षस्य कोटरे पतितम् अस्ति। तत् अन्विष्य धरतु भवान्। अङ्गुलीयकं धरता भवता सर्वप्रथमम् एकं कार्यं करणीयम्। अङ्गुलीयकं धृत्वा इतः अनीतदूरे स्थितं कमलपुरं गच्छतु भवान्। तत्र वृक्षमूले जल्पन्तः केचन दृश्यन्ते। तेषु अन्यतमः भवतः बन्धुः भवति। विना प्रश्नं भवान् तं बन्धुं ज्ञातुं शक्नोति चेत् भवतः एतत् ताम्रमयम् अङ्गुलीयकं सुवर्णमयं भविष्यति। भवदिच्छानुगुणम् अपेक्षितं धनं दास्यति च। यावत् भवान् जानन् अपि अपात्रे दानं न कुर्यात् तावत् एतत् सुवर्णमयं स्थास्यति, धनं दास्यति च। तत् ताम्रमयं यदा भविष्यति तदा भवता ज्ञातव्यं यत् अङ्गुलीयकस्य माहात्म्यं समाप्तम् इति। स्वबन्धुगृहे एकं दिनं यावत् केवलं स्थित्वा स्वग्रामः प्रत्यागन्तव्यः" इति।

आश्चर्यम् अनुभवन् रमानन्दः उत्थितवान्। वृक्षकोटरे अन्विष्टवान् च। तत्र ताम्राङ्गुलीयकं प्राप्तं तेन। तदीयायाम् अङ्गुल्यां सम्यक् स्थितं तत्।

रमानन्दः पत्नीं पुत्रान् च उत्थाप्य कमलपुरं प्रति गतवान्। अन्धकारप्रसारात् पूर्वम् एव ते कमलपुरं प्राप्तवन्तः। ग्रामस्य आरम्भे एव केचन वार्तालापं कुर्वन्तः उपविष्टाः तैः दृष्टाः। आश्चर्यं नाम ते रमानन्दस्य विषये एव वार्तालापं कुर्वन्तः आसन्।

"मम पिता पूर्वं कदाचित् मधुपुरं गतः अकस्मात् तीव्रम् अस्वस्थः जातः। परिचिताः अपरिचिताः इव व्यवहृतवन्तः। तदा कश्चित् दयया मम पितरं चिकित्सालयं नीतवान्। वैद्येन चिकित्सार्थं प्रभूतं धनं पृष्टम्। तत्समये रमानन्देन एव धनसाहाय्यं कृतम्। प्रतिस्वीकरणं निराकृतं च। मया एतत्सर्वं मम पितुः मुखात् श्रुतम्। तादृशः रमानन्दः इदानीं निर्धनः सन् स्वग्रामात् निर्गतः इति श्रूयते। सज्जनानां निवासार्थं न अयं कालः" इति खेदेन उक्तवान् कश्चित्।

"मम पिता बाल्ये एव मातापितृविहीनः बन्धुभिः वञ्चितः च जातः आसीत्। तथापि तारुण्ये उत्साहेन वाणिज्यम् आरब्धवान् आसीत्। किन्तु अनुभवराहित्यात् कर्मकराणां वञ्चनया च मम पिता ऋणकूपे पतितः। तदा अन्येन बोधितः मम पिता रमानन्दं साहाय्यं प्रार्थितवान्। रमानन्दः तु अल्पाम् अपि उपेक्षाम् अप्रदर्शयन् धनसाहाय्यं कृतवान्" इति उक्तवान् अपरः।

एवं तेषु उपस्थितेषु एकैकः अपि पूर्वं



प्रवृत्तां घटनाम् उदाहरन् रमानन्दस्य प्रशंसां करोति स्म।

किन्तु महेशः नाम कश्चित् एतद्विरुद्धम् अभिप्रायं प्रकटयन् उक्तवान्– "भवन्तः रमानन्दस्य पृष्ठभूमिकां न जानन्ति। तस्य पिता अन्याय्येन प्रभूतं धनं सम्पादितवान् आसीत्। अतः सः पापफलरूपेण आगतात् घोरव्याधितः प्राणान् त्यक्तवान्। स एव व्याधिः रमानन्दस्य पितरम् अपि अपीडयत्। तत्सन्दर्भे केनचित् संन्यासिना सूचितं यत् परम्पराप्राप्ता समग्रा सम्पत्तिः दानरूपेण दत्ता चेत् व्याधिः अपगच्छति इति। अतः एव रमानन्देन दानं कृतम्। किन्तु रमानन्दवंशे जातः कोऽपि परिश्रमेण जीवनं न जानाति।



आयस्य अभावतः रमानन्दः निर्धनः जातः'' इति।

तत्समये रमानन्दः साक्षात् महेशस्य समीपं गत्वा उक्तवान्– ''वत्स! अहम् अस्मि रमानन्दः। मधुपरतः आगच्छन्तः स्मः वयम्। एतस्मिन् कमलपुरे कश्चित् बन्धुः स्यात् इति न तर्कितम् आसीत् मया। भवतः मुखदर्शनात् ज्ञातं यत् भवान् मम बन्धुः इति'' इति।

आगतः रमानन्दः एव इति ज्ञात्वा तत्र उपस्थिताः सर्वे उत्थाय नमस्कृत्य– ''श्रीमन्! भवद्विषये अस्माभिः बहुधा श्रुतम्। भवतः दर्शनात् नितरां सन्तुष्टाः वयम्। भवादृशः एवं दुर्दशां प्राप्तवान् इति श्रुत्वा खिन्नाः च। अस्माभिः इदानीं कीदृशं साहाय्यं करणीयम् इति सूचयतु कृपया'' इति विनयेन उक्तवन्तः।

रमानन्दः तर्जन्या धृतम् अङ्गुलीयकं दृष्टवान्। तत् इदानीं ताम्रमयं नास्ति, अपि तु सुवर्णमयं दृश्यते।

सः मन्दहासपूर्वकं तान् जनान् उक्तवान्– ''अहं कस्यापि साहाय्यं न इच्छामि। ये सत्कार्याणि कुर्वन्ति तान् कष्टानि न पीडयन्ति। भवत्सु कोऽपि मत्तः साहाय्यम् इच्छति चेत् वदतु। अहं यथाशक्ति साहाय्यं करिष्यामि'' इति।

तदा तेषु कश्चित् उक्तवान्– ''श्रीमन्! मया धनिकात् शतं रूप्यकाणि स्वीकृतानि आसन्। इदानीं वृद्धिभारः एव महान् जातः अस्ति। अतः मया पञ्चशतं रूप्यकाणि अपेक्ष्यन्ते। अचिरात् एव समग्रं धनं न प्रत्यर्पितं चेत् धनिकः मम भूमिं बलात्कारेण स्वायत्तीकरिष्यति'' इति।

''भवान् सायं धनिकेन सह मम समीपम् आगच्छतु। तदा धनं दास्यामि। अद्य अहं महेशस्य गृहे स्थास्यामि'' इति उक्तवान् रमानन्दः।

'रमानन्दः पुनरपि धनिकः जातः स्यात्' इति भावयन् तं नमस्कृत्य– ''अद्य मम महत् सौभाग्यम्। आगच्छतु, गृहं गच्छाम तावत्'' इति निवेदितवान् महेशः।

रमानन्दः पत्नीपुत्रैः सह महेशस्य गृहं

गतवान्। मायं सः ग्रामीणः धनिकेन सह महेशस्य गृहम् आगतवान्। रमानन्दः तस्मै धनं दत्त्वा तं प्रेषितवान्। सुवर्णमयं तत् अङ्गुलीयकं यावत् आवश्यकं तावत् धनं ददाति स्म।

पत्युः औदार्यं दृष्ट्वा रमानन्दपत्नी आश्चर्यचकिता— 'यः धनाभावकारणतः ग्रामं परित्यज्य प्रस्थितः सः एव इदानीम् एवम् औदार्येण कथं दानं कुर्वन् अस्ति? कथम् एतेन धनं प्राप्तम्?' इति।

रमानन्दः एकान्ते पत्नीम् अङ्गुलीयकस्य प्राप्तेः वार्ताम् वैशिष्ट्यं च उक्तवान्।

अनन्तरदिने रमानन्दः स्वग्रामं गन्तुम् उद्युक्तः। तदा महेशस्य पिता रमानन्दसमीपम् आगत्य उक्तवान्— "श्रीमन्! मम पुत्र्याः विवाहः निश्चितः। किन्तु धनं मम समीपे पर्याप्तं नास्ति। भवान् यदि त्रिसहस्रं रूप्यकाणि दद्यात् तर्हि मम पुत्र्याः विवाहः निर्विघ्नं प्रचलेत्" इति।

"धनम् आवश्यकं वा? तर्हि ग्रामप्रमुखस्य सम्मुखे भवान् ऋणपत्रं लिखित्वा ददातु। अहं भवता सह आगमिष्यामि" इति उक्तवान् रमानन्दः।

"ऋणपत्रम्? एतस्य तात्पर्यं सिध्यति यत् भवान् धनमाहात्म्यं कर्तुं न सिद्धः, ऋणरूपेण चेत् दातुं सिद्धः इति। एवं ननु?" इति आश्चर्येण पृष्टवान् महेशस्य पिता।



"आम्। अहं मम बान्धवान् भिक्षुकान् कर्तुं न इच्छामि। ये अन्यान् याचन्ते ते भिक्षुकाः एव इति मम आशयः" इति उक्तवान् रमानन्दः।

"अस्तु तावत्, ऋणरूपेण एव भवान् मह्यं धनं ददातु। किन्तु बान्धवानां मध्ये ऋणपत्रस्य प्रस्तावः किमर्थम्?" इति पृष्टवान् महेशस्य पिता।

"भवान् कस्मैचित् ऋणपत्रं विनैव ऋणं ददातु। तदा धनस्य प्रतिप्राप्त्यर्थं कीदृशं कष्टम् अनुभूयते इति स्वयं ज्ञायते" इति उक्तवान् रमानन्दः।

महेशस्य पिता किमपि अवदन् मौनं स्थितवान्। रमानन्दसकाशात् तेन ऋणं न

स्वीकृतम्।

प्रतिगमनसमये रमानन्दः-तस्यैव वृक्षस्य अधः विश्रान्त्यर्थम् उपविष्टवान्, यस्य च अधः गमनसमये उपविष्टम् आसीत्। पुत्राणां निद्रायाः अनन्तरं पत्नी रमानन्दं पृष्टवती– ''अन्येषां साहाय्यं कुर्वन् भवान् बान्धवस्य महेशस्य पितुः साहाय्यं किमर्थं निराकृतवान्?'' इति।

''मम समीपे धनम् अस्ति इति जानन् महेशस्य पिता धनं प्रार्थितवान्। वस्तुतः तु धनस्य आवश्यकता नास्ति तस्य। अतः एव ऋणपत्रस्य प्रस्तावः यदा आगतः तदा सः मौनम् आश्रितवान्। यस्य महती आवश्यकता, सः ऋणपत्रं लिखित्वा दातुं सिद्धः भवेत् एव। अपरिचिताः तु अनिवार्यतायां सत्याम् एव धनं प्रार्थयन्ते। अपरिचितेषु अपि वञ्चकाः भवेयुः नाम। अतः एव परीक्ष्य पात्रत्वं निर्णीय धनं दातव्यम्। मित्राणि बान्धवाः वा धनं प्रार्थयन्ते चेत् ऋणपत्रं विना धनं न दातव्यम्। अनुभवात् मया अवगतः अंशः एषः'' इति उक्तवान् रमानन्दः।

अनन्तरं रमानन्दः तत्पत्नी च निद्रामग्नौ जातौ। रमानन्दस्य स्वप्ने सः संन्यासी पुनः आगत्य– ''कमलपुरे भवता बन्धुः सम्यक् एव अभिज्ञातः। धनदानविषये इदानीं भवता या धारणा आश्रिता सा नितरां श्लाघ्या। अपात्रे दत्तं धनं सर्वथा निष्फलम्। इतः परम् अपि पात्रे दानं कुर्वन् भवान् सुखेन जीवतु। यावत् भवान् निष्कल्मषहृदयः भवति तावत् दारिद्र्यं भवन्तं न पीडयति'' इति उक्त्वा अदृश्यतां गतवान्।

विश्रान्तिं समाप्य रमानन्दः पत्नीपुत्रैः सह स्वग्रामं प्रत्यागतवान्। इदानीं सः बुद्धिमत्तया पात्रापात्रतां निर्णीय दानं करोति। अतः एव वञ्चकाः तस्य समीपं गन्तुं भीतिम् अनुभवन्ति। निर्धनाः तु निस्सङ्कोचं गत्वा धनं प्राप्नुवन्ति। सत्कीर्तिं प्राप्य परोपकारनिरतः सन् चिरकालं सुखेन जीवितवान् रमानन्दः।





# लुण्ठाकः युवराजः

## १५

(खननसमये कदाचित् शङ्करवर्मणा पूर्वजैः आराधिता कनकदुर्गामूर्तिः प्राप्ता। एतत् जानन् वीरसिंहः साग्रहम् आज्ञापितवान् यत् सा च मूर्तिः मह्यम् उपायनरूपेण अर्पणीया इति। शङ्करवर्मणा एतत् निराकृतम्। वीरसिंहस्य सेनापतिः सर्वदमनः तं विग्रहं बलात् स्वायत्तीकृत्य नदीमार्गेण राजधानीं प्रति प्रस्थितवान्। मार्गे केनचित् मायया इव स च विग्रहः अपहृतः। तदनन्तरम्......।)

नौकायां स्थितानां भटानाम् आक्रोशनं श्रुत्वा आश्चर्यचकितः क्रुद्धः च सर्वदमनः अधिकारदर्पेण– "अये! किम् एतत् आक्रोशनम्! भीरवः! स्थगयन्तु नौकाम्" इति आज्ञप्य– "कः कोलाहलः भवताम्? कुत्र लुण्ठाकः? अज्ञातरूपेण तरणं कृत्वा आगतः वा सः? किं सः मकरः वा? भवन्तः किं निद्रां कृतवन्तः आसन्? स्वप्नः दृष्टः भवद्भिः, उत भ्रान्ताः वा भवन्तः?" इति कोपेन तर्जितवान्।

नौकास्थाः भटाः– "श्रीमन्! सत्यम् एव एतत्! सः चोरः अस्माकम् उपरि आक्रमणं कृत्वा क्षणमात्रेण विग्रहम् उपरि नीत्वा ततः विद्युद्वेगेन अपरं तीरं प्राप्य अश्वम् आरुह्य



पलायितः" इति वदन्तः तीरम् आगतवन्तः। तावता सः अश्वारोही अदृश्यतां गतः आसीत्।

क्षणकालं मौनं स्थित्वा सर्वदमनः किं कथं प्रवृत्तं स्यात् इति चिन्तितवान्। 'एकेन हस्तेन रज्जुम् आधाररूपेण दृढं गृहीत्वा अपरेण हस्तेन विग्रहः कथं वा नेतुं शक्यः? चतुर्भिः सैनिकैः महता श्रमेण स च विग्रहः आनीतः आसीत्। तादृशं भारभूतं विग्रहम् एकः एकेन हस्तेन कथम् उन्नीतवान् स्यात्? तत्रापि तीरपर्यन्तं कथं वा नेतुम् अर्हति सः? विग्रहः नौकायां तु न दृश्यते। अथवा सः चोरः विग्रहं जले पातयित्वा भाररहितं कृतकं विग्रहं नयन् अस्मान् वञ्चितवान् स्यात् वा? नद्याम् अन्वेषणं कृतं चेत् विग्रहः प्राप्येत वा? अथवा नदीतले एव विग्रहस्य नयनार्थम् अन्यां काञ्चित् व्यवस्थां कल्पितवान् स्यात् वा सः? नद्यां सः पातितवान् न स्यात् एव। यतः नद्यां पातनसमये अल्पः वा शब्दः श्रूयेत एव खलु? तादृशः कोऽपि शब्दः अस्मासु केनापि न श्रुतः। इदानीं गतस्य विषये चिन्तनेन किमपि न प्रयोजनम्। अग्रे किम् इति चिन्तनीयम् इदानीम्। विग्रहचौर्यवार्तां श्रुत्वा राजा किं वा वदेत्? अग्रे का वा गतिः स्यात्?' इति बहुधा चिन्तयति सर्वदमनः। भटाः मौनं शिरः अवनमय्य स्थितवन्तः सन्ति।

'सेनापतिः अहं भटानां पुरतः मौनं तिष्ठामि चेत् ममैव अवमाननम्' इति आलोच्य सर्वदमनः महान्तं कोपं प्रदर्शयन् समीपस्थम् एकं भटं कपोले ताडयित्वा– "अये, भीरो! भवतः हस्ते खड्गः किम् अलङ्काराय? कश्चन चोरः यदा निधिभूतं विग्रहं चौर्येण नयन् आसीत् तदा किं भवता गाढा निद्रा क्रियमाणा आसीत्? आत्मानं सैनिकं वक्तुं किं लज्जा न अनुभूयते? शाटिकां वलयं च धृत्वा पाकं कर्तुं पाकशालां गच्छन्तु भवन्तः" इति सम्यक् तर्जितवान्।

सः भटः लज्जया शिरः अवनमय्य स्थितवान्। विग्रहचोरस्य ताडनम् अपि एतेन एव प्राप्तम् आसीत्। 'विग्रहचौर्यसमये तीरद्वये आयुधधारिणः अन्ये भटाः अपि आसन्। तैः अपि चोरग्रहणं कर्तुं न शक्तम्। तथापि निन्दनं ताडनं च मम एकस्य एव।

अन्यच्च अस्मासु भटेषु स्थितेषु, चोरः चौर्यं कृतवान् इत्येतत् अस्माकम् अपमानाय' इति आलोच्य उपायान्तरेण सर्वदमनम् उक्तवान् सः– "प्रभो, अस्मान् एतावतः भटान् वञ्चयित्वा कश्चन चोरः तावद्भारयुक्तं विग्रहं चोरयितुम् अर्हति इति भवान् भावयति वा?" इति।

"तर्हि विग्रहः कथम् अदृश्यः जातः?" इति कोपेन पृष्टवान् सर्वदमनः।

"कयाचित् दैवीशक्त्या घोरेण पिशाचेन वा स च विग्रहः अदृश्यः कृतः" इति उक्तवान् भटः।

"एवं वा? तर्हि एतं विषयं भवान् एव महाराजस्य पुरतः निवेदयतु" इति सूचितवान् सर्वदमनः।

एवं सर्वदमनः भटाः च शान्तिपुरं गत्वा वीरसिंहं नमस्कृत्य काल्पनिकान् बहून् अंशान् योजयित्वा इतिवृत्तं निवेदितवन्तः। "अस्माकं दौर्भाग्यस्य कारणतः एवं स्यात् अपि" इति उक्तवान् वीरसिंहः। 'जीवितः अहम्' इति मनसि एव तृप्तिं प्राप्तवान् सर्वदमनः।

'एतस्मिन् सन्दर्भे अपि पराजयः। अमूल्यः विग्रहः हस्तम् आगतः अपि च्युतः अभवत्। एवं किमर्थं भवति? किं दौर्भाग्यम् एव कारणम्, उत केनचित् मान्त्रिकेन शत्रुणा वा कारितः अभिचारप्रयोगः कारणं स्यात् वा? कः समर्थः मान्त्रिकः प्रष्टव्यः एतद्विषये?'



इत्येवंरूपेण गाम्भीर्येण चिन्तयन् उपविष्टवान् वीरसिंहः।

* * * *

जयपुर्याम् इदानीं विषादच्छाया। कनकदुर्गाविग्रहस्य प्रतिष्ठापनार्थं सर्वे नागरिकाः उत्साहेन प्रवृत्ताः आसन्। किन्तु स च विग्रहः अकस्मात् शत्रुभिः नीतः इत्यतः ते दिग्भ्रान्ताः सन्ति। सुमेधराजः वीरसिंहः दुष्टः इति सर्वे जानन्ति स्म। किन्तु तस्य क्रूरदृष्टिः एवम् आघातं कुर्यात् इति केनापि न चिन्तितम् आसीत्।

शङ्करवर्मा किङ्कर्तव्यतामूढः सन् प्रकोष्ठे मौनम् उपविष्टः अस्ति। तस्य समीपं गन्तुं, तेन सह वार्तालापं कर्तुं वा कस्यापि धैर्यं नास्ति।



किन्तु तदीया पुत्री सुकन्या मन्दं पितुः समीपं गत्वा प्रीतियुक्तेन स्वरेण– "तात! कुलदेवता चिरकालानन्तरम् अस्मत्समीपम् आगता आसीत्। इदानीं नष्टा अपि सा अचिरात् एव अस्माभिः पुनः प्राप्यते इति मम अन्तरङ्गं वदति। अतः भवान् चिन्तां मा करोतु कृपया" इति उक्तवती।

कनकदुर्गाविग्रहस्य प्राप्त्या नितरां सन्तुष्टा आसीत् सुकन्या। पुत्र्याः इच्छायाः अनुगुणम् एव शङ्करवर्मा विग्रह-प्रतिष्ठापनकार्ये उद्युक्तः आसीत्। अतः विग्रहस्य चौर्यात् सा अपि आघातम् अनुभूतवती एव।

'एतादृशी पुत्री मम सान्त्वनार्थम् आगता अस्ति खलु' इति भावयन् शङ्करवर्मा आत्मनः दुःखं प्रयत्नेन निगृह्य पुत्रीं प्रीत्या स्वसमीपम् आकृष्टवान्।

तावता "तात!" इति कश्चन मधुरः स्वरः ततः अनतिदूरे एव श्रुतः।

शङ्करवर्मा आश्चर्येण परितः दृष्टिं प्रसारितवान्। जयानन्दमुनेः आश्रमस्य शुकी मल्लिका समीपस्थस्य स्तम्भस्य उपरि उपविष्टा अस्ति।

शङ्करवर्मा उत्थितवान्। शुकी स्तम्भात् अवतीर्य भूमौ उपविश्य परिवर्त्य शङ्कवर्माणम् अपश्यत्। पुनः उड्डीय दीपस्तम्भस्य उपरि उपाविशत्। शुकी मां कुत्रापि नेतुम् इच्छति इति भावयन् शङ्करवर्मा ताम् अनुसृतवान्। सुकन्या अपि पितरम् अनुसृतवती।

उत्प्लुत्य उत्प्लुत्य अग्रे गत्वा शुकी उद्यानं प्राविशत्। तत्र मनोहरी कौमुदी प्रसृता अस्ति। शुकी कस्यचित् वृक्षस्य उपरि उपविश्य मधुरं शब्दम् अकरोत्। शङ्करवर्माणम् अनुसृत्य आगता सुकन्या– "अहो! तत्र पश्यतु तात! कनकदुर्गाविग्रहः दृश्यते तत्र" इति आश्चर्येण सन्तोषेण च उक्तवती।

सत्यम्, सर्वदमनेन बलात् नीतः विग्रहः दाडिमवृक्षस्य अधः दृश्यते! सुकन्या धावन्ती अग्रे गत्वा आनन्दाश्रूणि स्रावयन्ती– "तात! मया उक्तम् आसीत् खलु – कुलदेवी

अस्मत्समीपम् आगमिष्यति एव इति। पश्यतु, अल्पेन एव कालेन आगता अस्ति सा। पश्यतु भवान्। आगच्छतु अत्र" इति महता उत्साहेन उक्तवती।

आनन्देन आश्चर्येण च शङ्करवर्मणः मुखं पिहितम् अस्ति। अतः सः किमपि वचनं न उक्तवान्। 'शत्रुभिः नीतः विग्रहः एतावच्छीघ्रम् अत्र कथम् आगतः? केन कथम् अत्र आनीतः?' इति चिन्तयन् सः परितः दृष्टिं प्रसारितवान्।

मल्लिका किलकिलेति हासम् अकरोत्। शङ्करवर्मा तस्यां दिशि दृष्टिं प्रसारितवान्। वृक्षस्य पृष्ठभागतः अग्रे आगतस्य सुन्दरस्य युवकस्य स्कन्धे उपविश्य शुकी पुनः ध्वनिम् अकरोत्। सः दृढकायः युवकः इतोऽपि अग्रे आगतवान्।

युवकः शङ्करवर्मणः समीपम् आगत्य नमस्कृत्य– "श्रीमन्! अहं कः इति भवान् न जानीयात्। किन्तु भवतः विषये मया जयानन्दमुनेः मुखात् इतः पूर्वम् एव बहुधा श्रुतम्। एषा मल्लिका भवता ज्ञाता एव" इति उक्तवान्।

"भवान्.... शान्तिदेवस्य पुत्रः भवान्, सन्दीपकुमारः खलु?" इति अत्यानन्देन उक्तवान् शङ्करवर्मा।

"आं, भवतः पादसेवकः अहम्" इति उक्तवान् युवराजः सन्दीपः।

शङ्करवर्मा सन्दीपकुमारं प्रीत्या आलिङ्ग्य– "भवतः दर्शनं बहोः कालतः प्रतीक्षमाणः आसम्। इदानीं दैवानुग्रहात् सा





च आशा पूर्णा। सर्वदमनेन बलात् नीतः एषः विग्रहः भवता कथं प्राप्तः? कथम् अत्र आनीतः?'' इति पृष्टवान्।

''देवेन महानुग्रहः कृतः। अतः अहं विग्रहं भवत्समीपम् आनेतुं शक्तवान्'' इति विनयेन उक्तवान् सन्दीपकुमारः।

''कथम् एतत् साधितं भवता? के भवतः सहकारिणः?'' इति पुनः पृष्टवान् शङ्करवर्मा। सन्दीपकुमारः प्रवृत्तं समग्रं सङ्क्षेपेण निवेदितवान्।

''चतुर्भिः अपि उन्नेतुम् अशक्यः एषः विग्रहः भवता एकाकिना कथम् एतावद्दूरम् आनीतः?'' इति आश्चर्येण पुनः पृष्टवान् शङ्करवर्मा।

''मया तत् कथं शक्तम् इति अहम् एव न जानामि। एतत् कार्यं कथमपि साधनीयम् एव इति दृढं निश्चित्य अहं कार्यप्रवृत्तः। काचित् अव्यक्ता शक्तिः मयि प्रविष्टा आसीत् इति भाति। सर्वं देव्याः अनुग्रहात् एव सम्पन्नम् इति भावयामि अहम्'' इति उक्तवान् सन्दीपकुमारः।

''आं, सर्वं देव्याः लीला। स्वसान्निध्येन वयम् अनुग्रहणीयाः इति देव्याः इच्छा आसीत् इति मन्ये। अतः एव भवन्तं द्वारीकृत्य पुनः अत्र आगता अस्ति सा। मम पुत्र्या पुनः पुनः उच्यमानम् आसीत्– विग्रहः प्रत्यागमिष्यति इति। तया यथा उक्तं तथैव प्रवृत्तम्'' इति वदन् पुत्रीं साभिमानं दृष्टवान् शङ्करवर्मा।

''अस्मत्समीपम् आगन्तुं कुलदेवता जयानन्दमुनेः प्रियशिष्यम् एव चितवती'' इति उक्तवती सुकन्या।

सन्दीपः आश्चर्येण सुकन्यां दृष्टवान्। एतत् जानन् शङ्करवर्मा– ''राजकुमार! एषा मम पुत्री सुकन्या। कुत्र कथं व्यवहरणीयम् इति सा इतोऽपि सम्यक् न जानाति। इतः परं सर्वं ज्ञातव्यं तया'' इति उक्तवान्।

''प्रियवचनकथनपूर्वकम् अन्यस्य प्रीतिः कथं सम्पादनीया इति तु सा जानाति एव'' इति हसन् उक्तवान् सन्दीपः।

शङ्करवर्मा पुत्रीं पश्यन्– ''वत्से! युवराजः इदानीम् अस्माकम् अतिथिः। योग्यं सत्करणीयः सः। एतत् अस्माकं कर्तव्यम्''

इति उक्तवान्।

"भवतां सत्कारस्य स्वीकारे ममापि इच्छा अस्ति एव। किन्तु अधिककालम् अत्र स्थातुं न अर्हामि अहम्। यतः सहकारिणः मम प्रतीक्षां कुर्वन्तः सन्ति। इतः परं यस्मिन् कस्मिन् अपि क्षणे आक्रमणार्थं सेनां प्रेषयितुम् अर्हति वीरसिंहः। भवतः राज्यस्य रक्षणार्थं मित्रैः सह मिलित्वा मया यथाशक्ति प्रयत्नः करणीयः अस्ति। भवता अपि इतः परं विशेषजागरूकता आश्रयणीया" इति वदन् सन्दीपकुमारः अनतिदूरे स्थितं मित्रद्वयं हस्तसङ्केतेन तत्रैव स्थातुं सूचयित्वा– "गच्छाम तावत्, अल्पे एव काले भवता प्रतिप्रेषणीयः अहम्" इति वदन् राजभवनस्य दिशि पदानि स्थापितवान्।

युवराजम् आसने उपवेश्य सुकन्या फलानि आनेतुम् अन्तः गतवती। तदा शङ्करवर्मा सन्दीपकुमारम् उक्तवान्– "युवराज! आत्मनः रक्षणे मम तावती चिन्ता नास्ति। भवतः योगक्षेमविषये एव मम महती चिन्ता। वीरसिंहः यावत् जीवति तावत् अस्माकं निश्चिन्तता न भवति एव। तस्य दौष्ट्यं दिने दिने वर्धमानम् अस्ति। केनापि उपायेन मारणीयः सः। तस्य संहारार्थम् एषः एव समयः" इति।

"वीरसिंहस्य मारणार्थं बहवः अवकाशाः इतः पूर्वं प्राप्ताः आसन्। किन्तु सः युद्धे एव पराजेतव्यः इति मम इच्छा। सः कुतन्त्रेण मम पितरं राज्यच्युतं कृतवान् इति तु सत्यम् एव। किन्तु तेनैव क्रमेण तस्य मारणार्थं मम इच्छा नास्ति। युद्धे सः अस्माकं सामर्थ्यं दृष्ट्वा पश्चात्तापेन दग्धः सन् मरणं प्राप्नुयात्। युद्धे मम पराजयः भवेत् चेदपि मया तत् अङ्गीक्रियते। किन्तु वाममार्गस्य आश्रयणे मम इच्छा नास्ति" इति गाम्भीर्येण उक्तवान् सन्दीपकुमारः।

फलानि स्वीकृत्य तत्र आगता सुकन्या सन्दीपस्य वीरवचनानि श्रुत्वा पुलकिता भावपरवशा च जाता। शङ्करवर्मा अपि नितरां सन्तुष्टः। – (अनुवर्तते)






# देवकन्यायाः वरः

वासार्थं वृक्षान्तरम् अनिच्छन्तम् इव व्यवहरन्तं, पूर्वतनवृक्षस्य शाखायाम् एव लम्बमानं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च।

तदा शवान्तर्गतः वेतालः अवदत्– "अये महाराज! फलं किञ्चिदपि अप्राप्नुवन् अपि भवान् एवं घोरे श्मशानमार्गे, तत्रापि मध्यरात्रे, किमर्थम् अटति? एतादृशं कार्यं करोमि इति कस्मैचित् वचनं दत्तवान् वा भवान्? मानधनाः वचनभङ्गं कर्तुं न इच्छन्ति इति तु सहजम्। किन्तु कदाचित् परिस्थितिपरिणामतः कैश्चित् वचनभङ्गः क्रियेत। काचित् देवकन्या पूर्वं तथैव कृतवती। तस्याः कथा श्रुता चेत् मम वचनस्य आशयः स्पष्टं ज्ञायेत भवता। कथाश्रवणतः

## वेतालकथा



मार्गायासपरिहारः तु भवति एव। अतः कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं चक्रधरपुरे चन्द्रकान्तः नाम कश्चन तरुणः आसीत्। स्वकीये बाल्ये एव सः मातापितृवियोगं प्राप्तवान् आसीत्। वृद्धा पितामही एव तं प्रीत्या महत्या पोषितवती आसीत्।

इदानीं तस्य सम्पत्तिः नाम दशैकर्मिता निस्सारा भूमिः। पित्रार्जिता अन्या काऽपि सम्पत्तिः तेन न प्राप्ता आसीत्।

कदाचित् गृहे सुप्तः चन्द्रकान्तः, रात्रेः द्वितीयः यामः अतीतः चेदपि निद्रां न प्राप्तवान्। एतेन खिन्नः सः शयनात् उत्थितवान्। लघुविहारं कृतवान् सः। गृहस्य पुरतः एव तदीया निस्सारा भूमिः। बहिः मन्दः वायुः वाति स्म। अतः चन्द्रकान्तः स्वभूमौ कटं प्रसार्य सुप्तवान्। एवं सुप्तवतः तस्य मनःपटले दिवङ्गतयोः मातापित्रोः मुखे आगते। तयोः मरणं स्मृतिपथे आगतम्। स्वस्य कष्टकरी परिस्थितिः अपि स्मृता तेन। एवं चिन्तयन् एव सः कदाचित् निद्रादेव्याः वशं गतः।

किञ्चित्कालस्य अनन्तरं ततः अनतिदूरे सुश्राव्यं गानं श्रुतम्। एतेन चन्द्रकान्तः जागरितः। उत्थितः सः, तस्याम् एव दिशि आगच्छन्तीं, विविधैः आभरणैः वर्णमयैः वस्त्रैः च युक्तां काञ्चित् अपूर्वां सुन्दरीं दृष्टवान्।

'एतस्मिन् समये आगच्छन्ती सा का स्यात्? प्रायः एषा काचित् देवकन्या एव' इति आलोच्य चन्द्रकान्तः ताम् उद्दिश्य उक्तवान्– "अहो, सौभाग्यं भवत्याः! न कोऽपि क्लेशः, न काऽपि चिन्ता! अत एव चन्द्रिकामय्यां रात्रौ गायन्ती सुखेन विहरन्ती अस्ति। देवकुले जाता खलु भवती। अत एव एतादृशं सौभाग्यम्। कष्टानि तु अस्मदादीनां मानवानाम्। धिक् मानवजन्म" इति।

सा देवकन्या चन्द्रकान्तं परीक्षादृष्ट्या पश्यन्ती उक्तवती– "दर्शनेन एव ज्ञायते यत् भवान् उप्रविंशतिवर्षीयः दृढकायः तरुणः इति। एतादृशस्य भवतः एतस्मिन्

एव वयसि जीवने विरक्तिः किमर्थम्? मानवानां स्वभावः एव एषः। स्वशक्तौ सर्वथा अविश्वासः तेषाम्। सर्वं दैवेन क्रियते इति विश्वसन्ति भवन्तः। स्वशक्तौ विश्वस्य कार्यं कृतं चेत् उत्तमं फलं कुतो वा न प्राप्येत? तदस्तु, विरक्त्युत्पादकं तादृशं किं घोरं कष्टं प्राप्तं भवता?" इति।

चन्द्रकान्तः स्वस्य निर्धनत्वं दयनीयां परिस्थितिं च विस्तरेण निवेद्य उक्तवान्– "अम्ब! एतादृश्यां स्थितौ मया किं वा कर्तुं शक्येत? आशाकिरणः एव न दृश्यते जीवने" इति।

तदा सा देवकन्या मन्दहासपूर्वकम् उक्तवती– "भोः, भवतः मूर्खतां पश्यन्ती अहं हासं प्राप्नोमि। यत्र भवान् सुप्तः सा भूमिः भवदीया एव खलु? भूदेव्यां यः विश्वमिति सः निराशः न भवति। एतस्यां भूमौ स्वपरिश्रमेण कृषिं कर्तुं न शक्यं वा भवता?" इति।

"मातः, अहं परिश्रमं न इच्छामि इति न। मदीया एषा भूमिः सत्त्वहीना। पाषाणमय्याम् एतस्यां भूमौ किं, बीजम् अङ्कुरितं स्यात्? भवती कृषिविषये किमपि न जानाति। अतः एव एवम् उपदिशति" इति उक्तवान् चन्द्रकान्तः।

"भोः, वस्तुतः अपि कृषिकार्ये भवतः आसक्तिः अस्ति वा? तर्हि अहम् एकं वरं दास्यामि। तस्य परिणामतः, भवान् एतस्यां



भूमौ यत्किमपि बीजं वपति चेदपि तत् अङ्कुरितं भवेत् एव। अतः अद्य एव कृषिकार्यस्य आरम्भं करोतु। किन्तु एतस्य वरस्य प्रतिफलम् अपि अहं किञ्चित् इच्छामि। अत्र मम स्वेच्छाविहारार्थं निर्बाधः अवकाशः स्यात्। विन्ध्यवासिन्याः पूजार्थं प्रतिदिनम् इतः पुष्पाणि प्राप्येरन्। अतः भवता क्षेत्रे कुत्रचित् पुष्पसस्यानि एव आरोपणीयानि। अपेक्षितस्य पुष्पस्य स्वीकारे मम अधिकारः स्यात्। एते विषयाः कदापि न विस्मरणीयाः भवता" इति उक्तवती देवकन्या।

चन्द्रकान्तः एतत् सन्तोषेण अङ्गीकृतवान्। एकमासाभ्यन्तरे सः भूमिं सम्यक् कृष्ट्वा भूमिं चतुर्धा विभज्य एकत्र



इक्षुम्, अपरत्र व्रीहिम्, अन्यत्र फलसस्यानि, इतरत्र पुष्पसस्यानि च आरोपितवान्। क्षेत्रस्य मध्ये स्ववासार्थं सामान्यम् एकं गृहं निर्मितवान् सः।

अल्पे एव काले तेन आरोपितानि बीजानि अङ्कुरितानि। शुष्का भूमिः इदानीं हरिद्वर्णेन शोभते। विविधानि पुष्पाणि तत्र पुष्पितानि दृश्यन्ते।

कदाचित् चन्द्रकान्तः रात्रौ गृहे सुप्तवान् आसीत्। तदा तेन देवकन्यायाः सुमधुरं गानं श्रुतम्। जागरणं प्राप्य सः गृहात् बहिः आगतवान्। देवकन्या पुष्पोद्याने लीलया विहरन्ती सन्तोषेण पुष्पाणि सङ्गृह्णती आसीत्।

समीपम् आगतं चन्द्रकान्तं दृष्ट्वा उक्तवती सा– "भोः, श्रमेण साधयितुम् अशक्यं किमपि नास्ति इति अवगतं खलु भवता?" इति।

"अम्ब! सर्वं भवत्याः अनुग्रहतः सिद्धम्। भवती अपूर्वं वरं दत्तवती इत्यतः निस्सारा भूमिः हरिद्वर्णयुक्ता जाता" इति कृतज्ञतापूर्वकम् उक्तवान् चन्द्रकान्तः।

"मम अनुग्रहात् सत्त्वहीना भूमिः फलयोग्या जाता इति तु सत्यम् एव। किन्तु तावता किम्? भवतः श्रमः एव सर्वस्य साधकं जातम्। कार्यश्रद्धा, निरन्तरप्रयत्नः च अस्ति चेत् दैवं साहाय्यं कुर्यात् एव। एतत् सर्वदा स्मरतु। 'उद्योगिनं पुरुषसिंहम् उपैति लक्ष्मीः' इति श्रुतं खलु भवता" इति उक्तवती देवकन्या।

ततः आरभ्य प्रतिदिनम् अपि देवकन्या तत् पुष्पोद्यानम् आगच्छति। सन्तोषेण विहरन्ती पुष्पाणि स्वीकरोति। तस्याः सान्निध्यतः इति भाति, चन्द्रकान्तस्य क्षेत्रे अपूर्वा फलसमृद्धिः। अतः चन्द्रकान्तः अनूह्यां धनसम्पत्तिं प्राप्तवान्। तस्य गृहे धनस्य धान्यस्य च समृद्धिः।

चन्द्रकान्तस्य धान्यानि अधिकेन मूल्येन विक्रीतानि भवन्ति। सर्वं दैवानुग्रहस्य फलम्। चन्द्रकान्तेन धान्यविक्रयणे कदापि हानिः न अनुभूता। गृहे चन्द्रकान्तः एकः एव खलु? अतः व्ययः अत्यल्पः। व्ययस्य अभावात् आयस्य निरन्तरवर्धनात् च चन्द्रकान्तः अल्पे

एव काले महान् धनिकः जातः।

'प्रभूतं धनं तु अस्ति। एवं स्थिते अपि लघुनि गृहे वासः किमर्थम्?' इति कदाचित् आलोचितवान् चन्द्रकान्तः विशालं भवनं निर्मितवान्।

गृहनिर्माणार्थं स्थलम् अपर्याप्तम् अभवत्। अतः सः कांश्चन वृक्षान्, कानिचन पुष्पसस्यानि च उन्मूलितवान्। तस्मिन् दिने तत्र आगता देवकन्या उद्यानस्य एतादृशीं गतिं दृष्ट्वा खेदेन अश्रूणि स्रावितवती। चन्द्रकान्तः एतत् दृष्टवान्। किन्तु तया सह वार्तालापं कर्तुम् अनिच्छन् मौनं गृहस्य अन्तः गतवान्।

प्रभूतं धनम् अस्ति इत्यतः सः कृष्यर्थं कर्मकरान् नियोजितवान्। गृहे अपि सेवकाः नियुक्ताः। उद्यानस्य कार्यार्थम् अपि कर्मकराः आगताः। इदानीं चन्द्रकान्तेन श्रमः कोऽपि न क्रियते। सः ग्रामेषु वृथा अटति। वृक्षस्य अधः उपविश्य अन्यैः सह जल्पनं कुर्वन् समयं यापयति।

कदाचित् देवकन्या तं दृष्ट्वा उक्तवती– "भोः, इदानीम् अत्र रात्रौ अपि मनुष्याणां सञ्चारः दृश्यते। अतः मम स्वेच्छविहारस्य एकान्ततायाः च भङ्गः भवति। अन्यच्च कर्मकराः उद्यानकार्याणि श्रद्धया न कुर्वन्ति। बहूनि सस्यानि म्लानानि, कृशानि वा। एतेन अहं खिन्ना अस्मि। अतः भवान् उद्यानकार्यं स्वयं करोतु" इति।

तदा चन्द्रकान्तः असमाधानेन– "किं वदति भवती? उद्यानकार्यं मया स्वयं





करणीयम् इति? हस्तवस्त्रादिकं मलिनीकृत्य कार्यं कर्तुं मम समयः नास्ति इदानीम्। अन्यच्च तादृशी आवश्यकता अपि नास्ति। रात्रौ पुष्पोद्याने जनसञ्चारः यथा न भवेत् तथा व्यवस्थां तु करिष्यामि" इति उक्तवान्। देवकन्या मौनम् आश्रितवती।

अनन्तरदिने राजधानीतः आगतः कश्चन राजोद्योगी कुत्रापि गच्छन् रात्रियापनार्थं चक्रधरपुरे स्थितवान्। चन्द्रकान्तः तं स्वगृहम् आनीय तस्मै विशेषभोजनव्यवस्थां कल्पितवान्।

भोजनानन्तरं वार्तालापमध्ये सः राजोद्योगी उक्तवान्– "महाराजः चतुर्भ्यः वर्षेभ्यः केनचित् गण्डेन पीड्यमानः अस्ति। बहूनां वैद्यानां बहुविधाः अपि चिकित्साः व्यर्थाः जाताः। गतवर्षे कश्चन संन्यासी राजानम् उक्तवान्– 'हिमालये प्राप्यमाणस्य पुष्पविशेषस्य रसः लेपितः चेत् एषः गण्डः अपगच्छेत्। किन्तु तावद्दूरतः पुष्पम् आनीतं चेत् आनयनसमये तत् शुष्कं स्यात्। अतः कञ्चित् मया सह प्रेषयतु। अहं पुष्पबीजानि ददामि। तानि उप्त्वा सस्यम् उत्पाद्य पुष्पाणि प्राप्नोतु' इति। किन्तु तेन प्रेषितानि बीजानि एतस्मिन् परिसरे न अङ्कुरितानि एव। कृषितज्ञानां प्रयत्नाः अपि विफलाः। इदानीं राज्ञा उद्घोषितम् अस्ति यत् यः येनकेनचित् उपायेन मम रोगम् अपनयति तस्मै अर्धं राज्यं दीयते इति" इति।

एतत् श्रुत्वा चन्द्रकान्तः अनन्तरदिने एव राजधानीं गतवान्। महाराजं दृष्ट्वा उक्तवान् च– "प्रभो, संन्यासिना दत्तानि बीजानि मह्यं ददातु। ततः अङ्कुरम् उत्पाद्य सस्यं वर्धयित्वा पुष्पाणि प्राप्य भवते अर्पयिष्यामि। भवतः रोगः शान्तः यथा स्यात् तथा करिष्यामि" इति।

राजा तत् बीजं चन्द्रकान्ताय दत्तवान्। तत् स्वीकृत्य चन्द्रकान्तः ग्रामम् आगतवान्। गृहस्य पार्श्वे एव भूमौ तत् बीजम् आरोपितवान्। ततः अङ्कुरम् उत्पन्नं, सस्यं प्रवृद्धं, पुष्पम् उद्गतं च।

तस्मिन् दिने तत्र आगता देवकन्या तत् पुष्पं दृष्ट्वा सन्तोषम् अनुभवन्ती– "अपूर्वं पुष्पम्! विन्ध्यवासिन्याः पदतले अर्पयिष्यामि

एतत्" इति वदन्ती पुष्पचयनार्थं हस्तं प्रसारितवती।

तावता तत्र आगतः चन्द्रकान्तः तां निवारयन्– "अये, तिष्ठतु तावत्। एतत् पुष्पं स्प्रष्टुं नास्ति भवत्याः अधिकारः। एतस्य पुष्पस्य साहाय्येन केषुचित् एव दिनेषु अहम् अर्धस्य राज्यस्य उत्तराधिकारी भविष्यामि" इति उक्तवान्।

एतत् श्रुत्वा आश्चर्यम् अनुभवन्ती सा देवकन्या– "एतस्मिन् उद्याने जातं यत्किमपि पुष्पं स्वीकर्तुम् अर्हामि एव अहम्। तथैव खलु नियमः?" इति पृष्टवती।

"स्यात् नाम तथा। किन्तु इदानीम् एतत् पुष्पं भवत्यै न दास्यामि अहम्" इति उक्तवान् चन्द्रकान्तः।

"एवं वा? विनाशकाले विपरीतबुद्धिः। कृतस्य पापस्य फलम् अनुभवतु" इति वदन्ती अदृश्या अभवत् देवकन्या।

चन्द्रकान्तः तत् अपूर्वं पुष्पं स्वीकृत्य महता सन्तोषेण राजधानीं गतवान्।

राजधान्यां तेन महती निराशा प्राप्ता। राजा दिवङ्गतः इति जनाः परस्परं खेदेन वार्तालापं कुर्वन्तः आसन्। चन्द्रकान्तः महता खेदेन ग्रामं प्रात्यागतवान्। तावता क्षेत्रे उद्याने च स्थितानि वृक्षसस्यादीनि सर्वाणि शुष्काणि जातानि आसन्। अनन्तरं चन्द्रकान्तेन आरोपितम् एकम् अपि बीजम् अङ्कुरितं न जातम्।

एवं कथां समाप्य वेतालः पुनः अवदत्– "राजन्! चन्द्रकान्तः राजा भविष्यति इति



असूयया खलु देवकन्या कुपिता सती वरम् उपसंहृतवती? देवकन्या सा, 'पुष्पं न दत्तम्' इति सामान्यस्य कारणस्य निमित्तं कस्यचित् सर्वस्वं नाशयितुम् अर्हति वा? मानवाः इव सा अपि असूयायुक्ता कोपशीला च इति खलु सिद्धम्? देवकन्या सा अनुचितं खलु कृतवती? मम एतेषां सन्देहानां योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः एवम् उक्तवान्— ''देवकन्यायाः व्यवहारे असूया अन्यविधम् अनौचित्यं वा न दृश्यते एव। यः निर्गतिकः आसीत् तस्मिन् निर्निमित्तं दयां प्रदर्शयन्ती सा तस्य उद्धारं कृतवती। प्रतिफलरूपेण उद्याने विहारं पुष्पस्वीकरणं च सा प्रार्थितवती। चन्द्रकान्तः एतद्द्वयं सन्तोषेण अङ्गीकृतवान् आसीत्। किन्तु यदा प्रभूतं धनं प्राप्तं तदा चन्द्रकान्तः नितरां परिवृत्तः। सः अलसः, स्वार्थी, भोगतत्परः च जातः। कार्येषु कर्मकरान् योजयन् सः परिश्रमं सर्वथा उपेक्षितवान्। राज्यप्राप्तीच्छया प्रेरितः सः उपकृतवत्याः देवकन्यायाः वचनम् अपि धिक्कृतवान्। उद्याननाशः, स्वेच्छाविहारस्य अवरोधः, चन्द्रकान्तस्य औदासीन्यं च तया देवकन्यया सोढम्। किन्तु इदानीं क्षमानर्हः जातः आसीत् चन्द्रकान्तः। स्वार्थी राजा भवति चेदपि सः स्वगुणं न परित्यजति। स्वार्थी राजा प्रजानां प्रतिवेशिराजानां च हितं नाशयेत् एव। अतः एव सा क्षेत्रम् उद्यानं च शुष्कं कृतवती। चन्द्रकान्तः यदा राजधानीं गतः ततः पूर्वम् एव राज्ञः मरणं तु काकतालीयम्। देवाः मानवानाम् अल्पं दुर्गुणं कथमपि सहेरन्। किन्तु विनाशकारकं दुर्गुणं कदापि न सहन्ते। एतत् तथ्यम् अजानन् चन्द्रकान्तः स्वस्य नाशस्य कारणं स्वयं जातः'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



चन्दमामानुबन्धः – २५

# ज्ञानभाण्डागारम्

## भारतस्य अन्तश्चेतनं किम्?

स्वामी विवेकानन्दः (१८६३-१९०२) भारतीयजनतायाः अन्धविश्वासस्य निष्क्रियतायाश्च अपसारणम् एव स्वस्य जीवनस्य लक्ष्यं भावयति स्म। अपूर्वः योगी सः भारतस्य उद्धारार्थम् उपायं जानाति स्म। स च उपायः नाम-धर्मः इति कथ्यमाना पारलौकिकता इति सः वदति स्म।

"यथा व्यक्तेः तथैव प्रत्येकराष्ट्रस्य अपि किञ्चन जीवनतत्त्वं भवति। तच्च वयं प्रमुखं स्वरं वक्तुं शक्नुमः। चतसृभ्यः दिग्भ्यः उद्गच्छन्तः आगच्छन्तः सर्वे स्वराः प्रमुखे स्वरे विलीनाः सन्तः अपूर्वाम् एकतां प्रमाणीकुर्वन्ति। ... यदि यत्किञ्चित् राष्ट्रं, परम्परागतस्य, जीवनमार्गदर्शकस्य, सजीवस्य तस्य जीवनतत्त्वस्य नाशनं कुर्यात् तर्हि तत् निर्जीवं भवेत्। ... कस्यचित् राष्ट्रस्य जीवनतत्त्वं राजनैतिकशक्तिः स्यात्। यथा – इंग्लैण्ड्। अन्यस्य कस्यचित् राष्ट्रस्य जीवनतत्त्वं कलात्मकं भवितुम् अर्हति। अन्यस्य कस्यचित् जीवनतत्त्वम् अन्यविधं स्यात् नाम। भारते तु धर्मः प्रधान्यम् आवहति। राष्ट्रजीवनरूपस्य सङ्गीतस्य प्रधानः स्वरः स एव"।

विवेकानन्दनेन प्रयुक्तस्य धर्मशब्दस्य अर्थः – सत्यस्य अन्वेषणम् इति, न तु केषाञ्चित् आचाराणां पालनम् इति। अस्माभिः सर्वैः आत्मा स्वयं प्रष्टव्यः यत् तस्य श्रेष्ठस्य गुरोः आशयात् वयं कियद्दूरे स्मः इति।

## भवन्तः जानन्ति वा?

१. सः विदेशीयः कः, यस्य च कारणतः भारतस्य कस्यचित् श्रेष्ठस्य राज्ञः विषये विशेषविषयाः ज्ञाताः?

२. यस्य च विषये तेन लिखितं, स च राजा कः?

३. तस्य राज्ञः राजधानी का आसीत्?

४. जगति प्रथमविमानयानेन यत् उड्डयनं कृतं, तस्य औन्नत्यं कियत् आसीत्?

५. जीवत्सु पक्षिषु विशालकायः कः?

(उत्तराणि ३६तमे पृष्ठे)

# विष्णुः

ब्रह्मा विष्णुः शिवश्चेति भारतीये पुराणे त्रयः प्रमुखाः देवाः। वस्तुतस्तु एते त्रयः अपि श्रेष्ठतमायाः दैवीशक्त्याः त्रीणि विभिन्नानि रूपाणि। सृष्टि-स्थिति-लयार्थम् अद्वितीया दैवीशक्तिः त्रिधा प्रकटिता भवति।

वेदेषु विष्णोः वर्णनम् एवं क्रियते– त्रिभिः विशालैः पदैः भूमिम् आकाशं च अभिव्याप्य अन्तरिक्षं व्याप्तः अस्ति इति। यदा यदा लोके महत् परिवर्तनं करणीयं भवति तदा भगवान् विष्णुः केनचित् रूपेण भूलोकम् अवतरति। अद्यावधि तेन नव अवताराः गृहीताः। राम-कृष्ण-बुद्धादयः



विष्णोः एव अवतारभूताः। दशमः अवतारः इतोऽपि न जातः। भगवान् विष्णुः कल्किरूपेण दशमम् अवतारं प्राप्य मानवानाम् अज्ञानं दुष्टप्रवृत्तिं च नाशयित्वा आध्यात्मिकतां जागरय्य मार्गदर्शनं करिष्यति।

शिल्पेषु चित्रेषु च विष्णोः सुन्दरं रूपं चित्रितं दृश्यते। मुखे विलक्षणेन तेजसा, उपरिष्टात् हस्तयोः शङ्खं चक्रं च धृत्वा, अधस्तात् हस्तयोः गदां पद्मं च धृत्वा शोभते सः।

तस्य वामतः लक्ष्मीदेवी विलसति। दक्षिणतः च भूदेवी तिष्ठति। केषुचित् चित्रेषु सः शेषशय्यायां शयानः दृश्यते। पुनः केषुचित् चित्रेषु वाहनस्य गरुडस्य उपरि उपविष्टः दृश्यते। एवं चित्रेषु विष्णोः अनेकानि रूपाणि।

अनन्तः, वैकुण्ठेश्वरः, वेङ्कटेश्वरः, केशवः, अच्युतः, माधवः, पीताम्बरः, जनार्दनः, विश्वम्भरः, दामोदरः, चतुर्भुजः, मुकुन्दः, मुरारिः, नारायणः, पद्मनाभः, यज्ञेश्वरः, हरिः इत्यादिभिः विविधैः नामभिः प्रसिद्धः अस्ति भगवान् विष्णुः।

नमस्त्रिमूर्तये तुभ्यं<br>
प्राक्सृष्टेः केवलात्मने।<br>
गुणत्रयविभागाय<br>
पश्चाद् भेदमुपेयुषे।।

# र स वा र्ताः

## बधिराणां नागरम्

कलकत्तामहानगरे इदानीं यः ध्वनिकोलाहलः श्रूयते सः एवम् एव अनुवर्तते चेत् केषुचित् शतेषु सहस्रेषु वा वर्षेषु जनाः सर्वे बधिराः भविष्यन्ति इति वदन्ति विशेषज्ञाः। तेषां कथनस्य सत्यासत्यता कथमपि स्यात् नाम। जनानां श्रवणशक्तौ ह्रासता दृश्यते इति तु सत्यम् एव। भारते कलकत्तानगरम् एव महाकोलाहलयुक्तं नगरम्। जनानां सम्भाषणाक्रोशाह्वानादयः, यानानां यातायाततः जायमानाः शब्दाः, यन्त्रागाराणां शब्दाः च अत्र कारणम्। शब्दमालिन्यनिवारणे कोऽपि उपायः चिन्तनीयः।



## अतीवप्राचीनः कूपः

एवं हि श्रूयते स्म यत् तुर्कदेशीयः कूपः एव अतिप्राचीनः इति। किन्तु एषु दिनेषु इसरायिल्देशे अन्यः कूपः प्राकाश्यं गतः, यश्च तुर्कदेशीयात् अपि प्राचीनः। एषः कूपः ८,००० वर्षेभ्यः पूर्वं खानितः इति विश्वस्यते। पाषाणयुगस्य एतस्य प्राप्त्या ज्ञायते यत् प्राचीने काले जलाश्रयाणां विषये उत्तमं ज्ञानम् आसीत् इति।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. काल्पनिककथापात्रस्य राबिन् हुड्वर्यस्य सादृश्येन युक्तः वास्तविकजीवने कश्चित् आसीत्। सः कः?
२. तम् आधारीकृत्य कः प्रख्यातः लेखकः ग्रन्थं लिखितवान्? तस्य ग्रन्थस्य नाम किम्?
३. तेन एव लेखकेन लिखिताः अन्ये प्रसिद्धाः ग्रन्थाः के?
४. बङ्गालीभाषया लिखितं रवीन्द्रनाथठाकूर्वर्यस्य 'गीताञ्जली'नामकं ग्रन्थं कः आंग्लभाषया अनूदितवान्?
५. तस्य आंग्लसंस्करणस्य प्रस्तावना केन लिखिता आसीत्?
६. यस्मिन् वर्षे गीतञ्जलेः आंग्लावृत्तिः प्रकाशिता तस्मिन् वर्षे तस्याः पुनर्मुद्रणं कियद्वारं जातम्?

# उत्तराणि

## भवन्तः जानन्ति वा?

१. चीनादेशीयः यात्रिकः फाहियानः।

२. विक्रमादित्यः।

३. उज्जयिनी।

४. रैट्सहोदरौ। १९०३ तमे वर्षे ८-१२ फूट् यावत् उड्डयनं कृतवन्तौ-द्वादश-सेकेण्ड्पर्यन्तम्।

५. उत्तराफ्रिकादेशीयः शुरुरमुर्गपक्षी।

## सामान्यज्ञानम्

१. स्काट्ल्याण्ड्देशीयः राब् राय्।
२. सर् वाल्टन् स्काट् (१७७१-१८३२) ग्रन्थस्य नाम – 'राब् राय्' इति।
३. 'आयिवान्हो', 'द टालिसमैन्', 'ए लजैण्ड् आफ् माण्ट्रोज्' इत्यादयः।
४. स्वयं कविः एव।
५. डब्ल्यू. बि. ईट्स्।
६. त्रयोदशवारम्। (१९१३ मार्चतः – १९१३ डिसेम्बर् अन्तं यावत्।)




# श्रीरामकृष्णपरमहंसः
## (६)

तेषु दिनेषु बङ्गालप्रदेशे बहवः महापुरुषाः आसन्। तेषु ब्रह्मसमाजस्य सञ्चालकः केशवचन्द्रसेनः अपि अन्यतमः। कदाचित् रामकृष्णवर्यः केशवचन्द्रस्य गृहं गतवान्, तत्रैव समाधिलीनः जातः च। एतस्याः घटनायाः परिणामतः केशवचन्द्रसेनः तदनुयायिनः च नितरां प्रभाविताः।

भजनं कुर्वन् श्रीचैतन्यः आत्मना सह वैष्णवभक्तानां समूहम् एव नयति स्म। एतस्य तत्त्वं ज्ञातव्यम् इति रामकृष्णवर्यस्य इच्छा जाता। कदाचित् भक्तैः सह भजनं कुर्वन् चैतन्यः रामकृष्णवर्यस्य नेत्रयोः पुरतः प्रत्यक्षः अभवत् एव। तन्मयतया एतत् दृश्यं दृष्टवान् रामकृष्णः।






विवेकानन्दनाम्ना ख्यातः नरेन्द्रनाथः १८८० तमे वर्षे रामकृष्णवर्यस्य समीपम् आगतः। नरेन्द्रस्य दर्शनतः रामकृष्णवर्यस्य मनः प्रफुल्लितं जातम्। किन्तु ऐदम्प्राथम्येन रामकृष्णवर्यं पश्यन् नरेन्द्रः तु भीतः। 'महात्मा इति ख्यातः एषः उन्मत्तः तु न स्यात् खलु?' इत्यपि चिन्तितं तेन। किन्तु काचित् अपूर्वा आकर्षणशक्तिः अपि तस्मिन् दृष्टा नरेन्द्रेण।



नरेन्द्रनाथः क्रमशः गुरोः आकर्षणशक्त्या आकृष्यमाणः आसीत्। पितुः मरणस्य कारणतः कुटुम्बनिर्वहणभारः नरेन्द्रस्य उपरि आपतितः। दैनन्दिनजीवन-निर्वहणार्थम् अपि तेन महत् कष्टम् अनुभूतम्। सः रामकृष्णवर्यं प्रार्थितवान् यत् मन्निमित्तं भवता धनदानार्थं देवी प्रार्थनीया इति। रामकृष्णवर्यः सूचितवान् यत् भवान् एव देवीं प्रार्थयतु इति। किन्तु नरेन्द्रः देव्याः पुरतः स्थित्वा धनं न प्रार्थितवान्, अपि तु ज्ञानं प्रार्थितवान्।

समाजोद्धारकः शिक्षाशास्त्रनिपुणः च ईश्वरचन्द्रविद्यासागरः कदाचित् रामकृष्णवर्येण मिलितः। तत्समये केनचित् पृष्टम्– "ज्ञानग्रहणसमये कश्चित् कदाचित् वदति वा?" इति। तदा तेन उक्तम्– "मधुनः पानसमये मधुपः किञ्चित्कालं मौनं तिष्ठति। मधुपानानन्तरं तु भ्रमरः सन्तोषेण गुञ्जति एव" इति।





बहवः प्रसिद्धाः पुरुषाः रामकृष्णेन मिलन्ति स्म। देवेन्द्रनाथः ठाकूर्, विजयकृष्णः गोस्वामी, स्वामी दयानन्दः इत्यादयः तेषु अन्यतमाः। नाटकलेखकः गिरीशचन्द्रघोषः तु रामकृष्णस्य शिष्यः जातः आसीत्। रामकृष्णः तस्य नाटकानि दृष्ट्वा सन्तोषम् अनुभवति, तत्सहकारिणः कलाकारान् आशिषा अनुगृह्णाति च।

एतस्य महात्मनः विषये सर्वत्र वार्ता प्रसृता आसीत्। तस्य जीवनक्रमस्य दिव्यायाः वाण्याः च कारणतः बहूनां जनानां जीवनलक्ष्यम् एव परिवृत्तम् आसीत्। एतं महात्मानं द्रष्टुं जनाः समूहरूपेण आगच्छन्ति। एषः यत्र गच्छति तत्र भक्तानां महान् समूहः एव दृश्यते।





कण्ठवेदनाकारणतः रामकृष्णवर्यः १८८५ तमे वर्षे अस्वस्थः जातः। वैद्याः सूचितवन्तः यत् अधिकं सम्भाषणं न करणीयं, समाधिस्थितिः अपि पौनःपुन्येन न प्राप्तव्या इति। किन्तु एतत् उभयम् अपि अशक्यम् आसीत्। यतः कश्चित् जिज्ञासुः किमपि पृच्छति चेत् रामकृष्णः उत्तरं ददाति एव। भगवतः नाम्नः निरन्तरस्मरणात् अप्रयत्नेन एव तेन समाधिस्थितिः प्राप्यते स्म।

रामकृष्णवर्यस्य स्वास्थ्यं विषमतां गतम्। अतः चिकित्सार्थं सः कलकत्तासमीपस्थं काशीपुरोद्यानं प्रति नीतः। महेन्द्रलाल-सरकारप्रभृतीनां समर्पितचित्तानां वैद्यानां चिकित्सायां प्रचलन्त्याम् अपि रामकृष्णवर्यस्य स्वास्थ्ये प्रगतिः तु न दृश्यते। कदाचित् रामकृष्णवर्यः नरेन्द्रनाथं स्वसमीपम् आहूय तीक्ष्णया दृष्ट्या पश्यन् तस्मिन् आत्मनः आध्यात्मिकशक्तिं पूरितवान्।





१८८६ तमे वर्षे आगस्ट्मासे १६ दिनाङ्के रामकृष्णवर्यः दिवङ्गतः। तस्मिन् दिने सायं काशीपुरघट्टे तदीयं पार्थिवं शरीरं चिताग्राम् अर्पितम्। अग्निस्पर्शपूर्वकम् अन्तिमसंस्कारः अपि निर्वर्तितः। एवम् श्रेष्ठस्य महापुरुषस्य जीवनयात्रा समाप्ता। किन्तु अनन्तरकाले तस्य प्रभावः विशेषतः प्रसृतः।

रामकृष्णवर्यस्य पत्नीं पूज्यां शारदादेवीं पश्यन्तः भक्ताः इदानीम् आत्मानं समाश्वासयन्ति। भक्ताः तस्याः समीपम् आगच्छन्ति। मातुः सकाशात् कश्चन बालः यां प्रीतिं प्राप्नोति, ताम् एव प्रीतिं शारदादेवीतः अपि प्राप्नुवन्ति भक्ताः।





गुरुणा स्वस्मिन् यः विश्वासः प्रदर्शितः तस्य बलेन नरेन्द्रनाथः अल्पे एव काले विशेषतः प्रगतिं साधितवान्। विवेकानन्दनाम्ना प्रसिद्धः जातः च। सः गुरोः रामकृष्णस्य सन्देशान् देशविदेशान् प्रापितवान्। रामकृष्णवर्यस्य उपदेशाः सदा अपि मानवेषु स्फूर्तिं पूरयितुं समर्थाः सन्ति।

— (समाप्तम्)




# वधूपरीक्षा

रामपुरे पूर्वं धर्मेन्द्रः नाम कश्चन धनिकः निवसति स्म। धर्मेन्द्रस्य अन्वर्थं नाम। कदापि अन्याय्यं व्यवहारं न करोति सः। अतः उत्तमा कीर्तिः प्राप्ता आसीत् तेन।

धर्मेन्द्रस्य एकमात्रपुत्रः विश्वनाथः। सः रूपवान् गुणवान् च। यदा पुत्रः प्राप्तवयस्कः जातः तदा धर्मेन्द्रः चिन्तितवान् यत् अस्मत्कुलयोग्या रूपवती गुणवती च वधूः आनेतव्या इति।

रामपुरे वरदराजः नाम तन्तुवायः आसीत्। वरदराजस्य धर्मेन्द्रस्य च आत्मीयः सम्बन्धः। वरदराजः उत्तमाः शाटिकाः निर्माय समीपस्थेषु ग्रामेषु विक्रयणं करोति। अतः बहूनां धनिकगृहाणां परचियः अस्ति तस्य। धर्मेन्द्रः कन्यान्वेषणप्रयत्नं, तद्विषये स्वस्य आशयं च वरदराजं निवेदितवान्।

वरदराजः क्षणकालम् आलोच्य उक्तवान्– "मित्र! बहूनां धनिकगृहाणां परिचयः अस्ति मम। शाटिकाविक्रयणसन्दर्भे धनिकपुत्र्यः अपि सहजतया दृश्यन्ते मया। पाण्डवपुरस्य मानधनस्य पुत्री कमला सुन्दरी। एवम् एव श्रीपुरस्य गुरुराजस्य पुत्री सरला अपि सुन्दरी। मानधनः गुरुराजश्च कुलेन धनेन च भवत्समानौ। अतः कमला-सरलयोः अन्यतरा भवतः स्नुषा भवितुम् अर्हति" इति।

वरदराजस्य कथनस्य अनुगुणं धर्मेन्द्रः विश्वनाथः च पाण्डवपुरं श्रीपुरं च गत्वा कमलां सरलां च दृष्ट्वा आगतवन्तौ।

कमला सरला च रूपेण अद्वितीये एव। दर्शनमात्रेण तयोः स्वभावादिकं तु न ज्ञायते। अतः विश्वनाथः पितरम् उक्तवान्– "एतयोः याङ्काञ्चित् अपि परिणेतुम् अहं सिद्धः। अस्मत्कुलोचिता का इति अनुभवी



ज्येष्ठः भवान् एव निर्णयतु'' इति।

धर्मेन्द्रः किमपि चिन्तयित्वा वरदराजस्य गृहं गत्वा उक्तवान्– ''मित्र! भवता सूचिते उभे अपि सुन्दर्यौ एव। किन्तु सौदर्येण केवलेन किं प्रयोजनम्? स्वभावः अपि अस्माभिः परीक्षणीयः। एतयोः स्वभावस्य ज्ञानार्थम् अहं काञ्चित् परीक्षां चिन्तितवान् अस्मि। एतदर्थं भवतः साहाय्यम् अत्यावश्यकम्'' इति।

तदा वरदराजः हसन्– ''विश्वनाथस्य विवाहे ममापि विशेषासक्तिः अस्ति एव। अतः भवता यथा उच्यते तथा कर्तुं सिद्धः अहम्। मया किं करणीयम् इति वदतु तावत्'' इति उक्तवान्।

धर्मेन्द्रः स्वमनसि स्थितां योजनां विस्तरेण निवेद्य वरदराजेन किं करणीयम् इति सूचितवान्।

धर्मेन्द्रस्य योजनां ज्ञात्वा वरदराजः सन्तोषं प्रकटयन्– ''उत्तमा योजना कृता भवता। का कीदृशी इति ज्ञातुम् एषः योग्यः उपायः'' इति उक्तवान्।

धर्मेन्द्रस्य सूचनायाः अनुगुणं वरदराजः नूतनविन्यासयुक्ताः काश्चन शाटिकाः स्वीकृत्य पाण्डवपुरं गतवान्। मानधनस्य पुत्री कमला वरदराजं सम्यक् जानाति एव। सा वरदराजं पृष्टवती– ''नूतनविन्यासयुक्ताः शाटिकाः आनीताः वा भवता?'' इति।

''आं पुत्रि! नूतनाः विन्यासाः यदा रच्यन्ते तदा सर्वप्रथमं भवत्यै एव खलु प्रदर्शयामि?'' इति वदन् शिरसि स्थापितं शाटिकाग्रन्थिम् अवतार्य शाटिकाः प्रसारितवान् वरदराजः।

कमला आसक्त्या शाटिकाः पश्यन्ती परीक्षमाणा आसीत्। वरदराजः तासु शाटिकासु काञ्चित् उन्नीय तस्यै प्रदर्शयन्– ''वत्से, एतां शाटिकां क्रीणातु। एषा शाटिका धृता चेत् भवती रतिः इव शोभते। अनन्तरं किं, कश्चन मन्मथः भवतीं नयेत् एव'' इति सविनोदम् उक्तवान्।

लज्जां कृतककोपं च प्रदर्शयन्ती कमला शाटिकां सम्यक् परिशीलितवती। शाटिका तस्यै नितराम् अरोचत। सा वरदराजम् उक्तवती– ''एषा शाटिका मह्यम् अरोचत।

किन्तु एतदनुगुणं चोलवस्त्रं न आनीतं वा भवता?" इति।

तदा वरदराजः– "चोलवस्त्रं वेमनि एव अस्ति वत्से। सप्ताहाभ्यन्तरे सज्जीकृत्य आनेष्यामि। भवती चिन्तां मा करोतु" इति उक्त्वा शाटिकायाः मूल्यं स्वीकृत्य ततः निर्गतवान्।

ततः तेन श्रीपुरं प्रति गतम्। तत्र गुरुराजस्य पुत्र्यैः सरलायै अपि वरदराजेन दत्ता शाटिका नितराम् अरोचत। किन्तु सा अपि उक्तवती– "अनुरूपं चोलवस्त्रं न आनीतं भवता" इति।

"सज्जीक्रियमाणम् अस्ति तत्। सप्ताहाभ्यन्तरे अनुरूपं चोलवस्त्रम् आनेष्यामि। चोलवस्त्रं दृष्ट्वा भवती आश्चर्यचकिता यथा भवेत् तथा सज्जीक्रियमाणम् अस्ति। अतः तदभ्यन्तरे भवती अन्यतः चोलवस्त्रं मा क्रीणातु" इति उक्त्वा शाटिकायाः मूल्यं स्वीकृत्य गृहं प्रत्यागतवान् वरदराजः।

सप्ताहद्वयस्य अनन्तरं चोलवस्त्रं स्वीकृत्य कमलायाः गृहं गतवान् वरदराजः। "पुत्रि! अनुरूपं चोलवस्त्रम् आनीतवान् अस्मि, पश्यतु" इति वदन् एकं चोलवस्त्रं प्रदर्शितवान् च।

तदा कमला– "एतत् मास्तु मह्यम्। मया अन्यतः अनुरूपं चोलवस्त्रं क्रीतम्" इति उक्तवती।



"अस्तु तर्हि" इति उक्त्वा ततः निर्गतः वरदराजः सरलायाः गृहं गतवान्। तं दूरात् एव दृष्ट्वा पृष्टवती सरला– "अविस्मृत्य चोलवस्त्रम् आनीतं खलु भवता?" इति।

"आम्, आम्। किन्तु आनयने अल्पः विलम्बः जातः" इति वदन् चोलवस्त्रं प्रदर्शयितुम् उद्युक्तः वरदराजः।

तदा सरला हसन्ती– "भोः महाशय! यथा यथा भवतः वयः प्रवर्धते तथा तथा विस्मरणशीलता अपि प्रवर्धते इति भावयामि। दशभ्यः दिनेभ्यः पूर्वं भवता शाटिका दत्ता खलु? भवतः गमनस्य अनन्तरम् अहं शाटिकां प्रसारितवती। तस्य अन्तः उत्तमं चोलवस्त्रम् आसीत्। वणिजः

भवतः एवं विस्मरणं चेत् वाणिज्यस्य का गतिः?" इति वदन्ती अन्तः गत्वा तत् चोलवस्त्रम् आनीय प्रदर्श्य पुनः उक्तवती– "तस्मिन् दिने मया शाटिकायाः मूल्यं केवलं दत्तम्। चोलवस्त्रस्य मूल्यं कियत् इति अद्य स्वीकरोतु" इति।

तदा वरदराजः हसन्– "वत्से! अन्वर्थं नाम भवत्याः। व्यवहारे अल्पा अपि कपटता नास्ति। दीर्घसुमङ्गली भवतु भवती। रूपेण मन्मथः कश्चित् अचिरात् एव भवतीं परिणयतु। चोलवस्त्रस्य मूल्यं न स्वीकरोमि। भवत्याः भाविविवाहस्य निमित्तं मम उपायनम् एतत् इति भावयतु" इति उक्त्वा, तया सानुरोधं दीयमानम् अपि धनं विनयेन तिरस्कृत्य गृहं प्रत्यागतवान्। धर्मेन्द्रं प्रवृत्तं सर्वं निवेदितवान् च।

तदा धर्मेन्द्रः उक्तवान्– "मम परीक्षायां सरला एव उत्तीर्णा अभवत्। कमलायै दत्तायां शाटिकायाम् अपि चोलवस्त्रं स्थापितम् आसीत् एव। सा तत् स्वसमीपे स्थापयित्वा 'मया अन्यतः चोलवस्त्रं क्रीतम्' इति असत्यम् उक्तवती। अल्पेषु विषयेषु एव स्वभावनिर्णयः भवति। मम कथनानुगुणं व्यवहरता भवता बहुधा उपकृतम्। तदस्तु, असत्यं वदन्ती कमला एकं चोलवस्त्रं स्ववशे स्थापितवती। अपरं भवता सरलायै उपायनीकृतम्। तयोः चोलवस्त्रयोः मूल्यं कियत् इति वदतु। अहं दास्यामि" इति।

तदा वरदराजः– "रे, किं वदति भवान्? विश्वनाथः ममापि पुत्रः इव। तस्य निमित्तं वध्वाः अन्वेषणे अल्पः व्ययः कृतः स्यात् मया। तत् धनम् अहं भवत्तः स्वीकुर्यां वा? तादृशः कृपणः वणिक् न अहम्। विवाहमुहूर्तम् अचिरात् एव निश्चित्य, विवाहदिने भोजनसमये मधुरभक्ष्यद्वयम् अधिकतया स्थापयतु मम पत्रे। तावता अलम्" इति हसन् उक्तवान्।

अनन्तरम् अल्पे एव काले शुभे मुहूर्ते सरला-विश्वनाथयोः विवाहः यथाविधि सवैभवं प्रवृत्तः।






वालिनः प्राणाः इतोऽपि न निर्गताः। सः नेत्रे उन्मील्य इतस्ततः पश्यति। तदा तेन स्वपुत्रसमीपे स्थितः सुग्रीवः दृष्टः। वाली सुग्रीवम् एवम् उक्तवान्– "अहं भवन्तं राज्यात् निष्कासितवान्। भवतः पत्नीम् अपहृतवान्। अतः एतद्विषये भवतः कोपः स्यात्। मरणान्तानि वैराणि इति श्रूयते। मम मरणम् आसन्नम्। मम निर्गमनात् सहैव वैरम् अपि गच्छतु। राज्यसुखं विभज्य भोक्तव्यम् इति ब्रह्मणा आवयोः ललाटे न लिखितम् आसीत् इति भाति। अथवा मया एव अविवेकेन व्यवहृतं स्यात्। तदस्तु नाम। भवान् सिंहासनारोहणं करोतु। प्राणप्रियं मम पुत्रं स्वपुत्रम् इव प्रीत्या पश्यतु। तस्य कोऽपि क्लेशः यथा न स्यात् तथा तं पोषयतु। ऋते भवतः, तस्य नान्यः शरणम्। सः पराक्रमेण अद्वितीयः अस्ति। सर्वेषु कार्येषु भवतः साहाय्यं करिष्यति सः। सुषेणस्य पुत्र्याः मम पत्न्याः तारायाः बुद्धिः नितरां तीक्ष्णा। भावीनि कष्टानि सा पूर्वम् एव ज्ञातुं शक्नोति। अतः प्रमुखेषु कार्येषु तया सह समालोच्य अग्रे पदं स्थापयतु। अन्यथा भवता महती विपत्तिः सम्मुखीकरणीया भवेत्। देवेन्द्रेण दत्ताम् एतां काञ्चनमालाम् अविलम्बेन स्वीकरोतु भवान्। मरणसमये सा यदि मम शरीरे स्यात् तर्हि कान्तिहीना स्यात्। अतः अविलम्बेन एतां स्वीकरोतु" इति।

वालिनः वचनम् अङ्गीकुर्वन् सुग्रीवः वालिनः कण्ठे स्थितां काञ्चनमालां



स्वीकृतवान्।

अनन्तरं वाली अङ्गदं स्वसमीपम् आहूय हितम् उपदिष्टवान्– येन भावेन भवान् मां पश्यति तेनैव भावेन भवता सुग्रीवः द्रष्टव्यः। शत्रुपक्षः कदापि न आश्रयणीयः भवता। सुग्रीवः यत् कार्यम् आदिशति तत् विनयेन श्रद्धया च करणीयम्। अयोग्येषु विश्वासः, मैत्री वा सर्वथा अनुचितः'' इति।

पुनः अल्पे एव काले वालिनः प्राणाः निर्गताः। सर्वे वानराः वालिनः अपूर्वं सामर्थ्यं पुनः पुनः वदन्तः रोदनं कृतवन्तः। पञ्चदश वर्षाणि यावत् युद्धं कृत्वा गन्धर्वस्य गोलभस्य वधः कृतः यत् तत् स्मरन्ति केचन। अन्ये केचन अन्याः घटनाः स्मरन्ति। 'वाली यदा जीवति स्म तदा शत्रुभयं स्वप्ने अपि न आसीत्' इति एकैकः अपि वानरः चिन्तयति स्म।

पत्युः गुणातिशयं स्मरन्ती तारा सोरस्ताडं रोदिति। वालिनः वक्षःस्थले लग्नं बाणम् अपसारितवान् नीलः। तारायाः सूचनायाः अनुसारम् अङ्गदः वालिनः पादौ स्पृशन् नमस्कृतवान्।

सकरुणं रुदत्याः तारायाः दशां दृष्ट्वा सुग्रीवः नितरां खिन्नः। सः उद्गतानि अश्रूणि मार्जयन् रामस्य समीपं गत्वा उक्तवान्– ''राम! पूर्वं दत्तं वचनं पालयन् भवान् वालिनं मारितवान्। राज्यं मदधीनं यथा भवेत् तथा अपि कृतवान्। किन्तु ममैव इदानीं जीविते इच्छा नास्ति। तारायाः वानराणां च खेदनात् प्राप्तेन राज्येन किं वा प्रयोजनम्? वालिना या पीडा दत्ता तेन खिन्नः क्रुद्धः च अहं वालिनः मरणम् इष्टवान् इति तु सत्यम् एव। किन्तु वालिनः मरणं प्रत्यक्षं पश्यन् अहं पश्चात्तापेन दग्धः अस्मि। मया समग्रं जीवनम् ऋष्यमूकपर्वते यापनीयम् आसीत्। वालिनः संहारे भवन्तं प्रेरयन् अहं घोरं पापम् आचरितवान्। यद्यपि वाली मयि क्रुद्धः आसीत् तथापि सः मम संहारं न चिन्तितवान् आसीत्। अतः एव मां दूरं प्रेषितवान्। शत्रौ अपि दयां प्रदर्शयतः तादृशस्य वालिनः संहारः कारितः मया। एवं पापभाक् अहं कथं वा सिंहासनारोहणं करिष्यामि? कथं वा

राजपदवीम् अलङ्करिष्यामि? राज्यं राजपदवी वा मास्तु मह्यम्। अहं चितारोहणं करिष्यामि। सीतान्वेषणकार्यं वानराः करिष्यन्ति। अतः इहलोकव्यापारस्य समापनार्थम् अनुमतिं ददातु कृपया" इति।

तारा रामं पश्यन्ती दुःखेन उक्तवती– "रामभद्र! येन बाणेन भवता वाली मारितः तेनैव बाणेन माम् अपि मारयतु। मम उपस्थितिं विना वाली स्वर्गसुखम् अनुभवितुं न अर्हति। यथा भवान् सीतावियोगात् खिन्नः तथैव वाली मम वियोगात् स्वर्गे खेदम् अनुभवन् अस्ति। अतः मां मारयतु कृपया। वालिनः मारणात् उत्पन्नं पापं मम मारणेन क्षालयतु" इति।

रामः तां सान्त्वयन् उक्तवान्– "भद्रे! वीरपत्न्या भवत्या एवं धैर्यच्युतिः न प्रदर्शनीया। आशाकेन्द्रस्य अङ्गदस्य अभ्युदयः चिन्तनीयः भवत्या। तदैव वालिनः अन्तिमवचनं पालितं भविष्यति। अतः प्रकृतं चिन्तयतु भवती" इति।

अनन्तरं सः वानरान् दृष्ट्वा पुनः उक्तवान्– "भोः वानरवीराः! एवं रोदनेन किं साध्यते भवद्भिः? वीराणां भवतां रोदनं दृष्ट्वा मृतस्य वालिनः आत्मा अपि खिद्येत। विलम्बार्थम् एषः न समयः। वालिना ऊर्ध्वलोकाः यथा प्राप्येरन् तथा उत्तरक्रियादिकम् अविलम्बेन आरम्भणीयम्। स्वकर्तव्यं स्मरन्तु भवन्तः" इति।

लक्ष्मणः दुःखेन उपविष्टवतः सुग्रीवस्य समीपं गत्वा उक्तवान्– "सुग्रीव!





विपत्तिकाले येषां मनः मलिनीभवति ते न धीराः। अलं रोदनेन। भावी राजा भवान् एव एवं रोदनं कुर्वन् उपविशति चेत् करणीयानि कार्याणि को वा निर्वहेत्? अतः अश्रूणि मार्जयित्वा उत्तिष्ठतु। चन्दनकाष्ठानां सङ्ग्रहार्थं वानरान् आदिशतु। उत्तरक्रियानिर्वहणार्थम् अङ्गदं सज्जीकरोतु। अङ्गदं तारां च सान्त्वनवचनानि उक्त्वा तयोः दुःखस्य आवेगं शमयतु। शिबिकाम् आनाययतु। शिबिकावाहकान् निश्चिनोतु। करणीयानि कार्याणि काले समापनीयानि खलु?'' इति।

लक्ष्मणस्य वचनं श्रुत्वा तारः किष्किन्धां गत्वा शिबिकाम् आनीतवान्। सुग्रीवः अङ्गदः च वालिनः कलेवरं शिबिकायां स्थापितवन्तौ। विविधैः पुष्पैः वालिनः शरीरम् आच्छादितवान् रामः। अनन्तरं वालिनः अन्तिमयात्रा आरब्धा। वानराः मार्गेषु पुष्पाणि अवकीर्णवन्तः।

अङ्गद-तार-सुग्रीवप्रभृतयः एतां यात्रां मौनम् अनुसृतवन्तः। स्त्रीसमूहः अपि अनुसृत्य अगच्छत्। नद्याः तीरे सिकतानाम् उपरि चिता सज्जीकृता।

अङ्गदः चितायाम् अग्निं योजितवान्। दहनकार्यं यथाविधि प्रवृत्तम्। रामः स्वयं सर्वाणि कार्याणि परिशीलयन् विधिलोपः यथा न भवेत् तथा व्यवस्थां कृतवान्।

सुग्रीवः निवापाञ्जलिं समर्प्य नद्यां स्नात्वा रामलक्ष्मणयोः समीपे स्थितवान्। तान् परितः वानराः विनयेन स्थितवन्तः।

अनन्तरं हनूमान् रामम् उक्तवान्– ''प्रभो, श्रीरामचन्द्र! भवदनुग्रहेण सुग्रीवेण राज्यं प्राप्तम्। किष्किन्धाप्रवेशार्थं भवता अनुज्ञा दातव्या। अनन्तरं भवता अपि किष्किन्धाम् आगत्य सत्कारः स्वीकरणीयः। सुग्रीवस्य पट्टाभिषेकः स्वहस्तेन भवता एव निर्वर्तनीयः। एषा सर्वेषां वानराणाम् अपेक्षा। अस्माकम् अपेक्षां पूरयन् भवान् अस्मान् सर्वान् सन्तोषयतु'' इति।

तदा रामः उक्तवान्– ''आञ्जनेय! भवतः अपेक्षा युक्ता एव। किन्तु ताम् अपेक्षां पूरयितुम् अहम् असमर्थः। पितुः आज्ञायाः



पालनार्थं मया चतुर्दश वर्षाणि यावत् वनवासः करणीयः। एतस्मिन् सन्दर्भे ग्रामस्य नगरस्य वा प्रवेशः सर्वथा निषिद्धः। अतः अहं किष्किन्धां प्रवेष्टुं न अर्हामि। किन्तु मम अनुपस्थित्या कार्यस्य न काऽपि हानिः। भवन्तः एव सुग्रीवस्य पट्टाभिषेकं निर्वर्तयन्तु। अङ्गदं युवराजं कुर्वन्तु। इदानीं श्रावणमासः। इतः परं चतुरः मासान् यावत् वर्षाकालः। एषः कालः सर्वकार्यविघातकः। कार्तिकमासस्य आगमनस्य अनन्तरं अग्रिमकार्ये उद्युक्ताः भवेम। भवन्तः किष्किन्धां गच्छन्तु। अहं लक्ष्मणेन सह पर्वते निवसामि। तत्रत्या गुहा वासयोग्या अस्ति। कार्तिकमासे उपस्थिते, सीतान्वेषणस्य आरम्भं करिष्यामः'' इति।

रामस्य आदेशं पालयन्तः वानराः किष्किन्धां प्रविष्टवन्तः। सुग्रीवः अपि बन्धुभिः सह विनयेन किष्किन्धाप्रवेशं कृतवान्। किष्किन्धायां सर्वेषां वानरप्रमुखाणां योगक्षेमं विचारितवान् सुग्रीवः। तारायाः अन्तःपुरं गत्वा सान्त्वनवचनानि उक्तवान् अपि।

अनन्तरं सुग्रीवस्य पट्टाभिषेकार्थं सन्नाहः आरब्धः। विविधानि सुवर्णाभरणानि, श्वेतच्छत्रं, चामराणि, सर्वविधाः मणयः, विविधानि रत्नानि, उत्तमानि वस्त्राणि, समस्ताः ओषधयः, पुष्पचन्दनाक्षतादयः, हरिद्राचन्दनकेसरादीनि, मधु-दधि-क्षीर-घृतादयः, अन्यविधानि बहूनि वस्तूनि च सङ्गृहीतानि। योग्येन चर्मणा निर्मिता पादरक्षा अपि सज्जीकृता।

अनन्तरं शुभे मुहूर्ते शास्त्रोक्तक्रमेण सुग्रीवस्य पट्टाभिषेकः प्रवृत्तः। गजः, गवाक्षः, गवयः, शरभः, गन्धमादनः, मैन्दः, द्विविदः, हनूमान्, जाम्बवान्, नलः इत्यादयः वानरप्रमुखाः विविधाभ्यः दिग्भ्यः सुवर्णकलशैः तीर्थजलानि आनीतवन्तः, तैः सुग्रीवस्य अभिषेकं कृतवन्तः च।

रामस्य आदेशस्य अनुगुणं सुग्रीवः अङ्गदं युवराजपदे अभिषिक्तवान्। एतेन सर्वे वानरवीराः सन्तुष्टाः। सुग्रीवविषयकं गौरवं प्रवृद्धम्। अभिषेकदिने सर्वे वानराः महता

सन्तोषेण नृत्यं कृतवन्तः।

पट्टाभिषेकस्य अनन्तरं सुग्रीवः मन्त्रिभिः सह ऋष्यमूकपर्वतं गत्वा किष्किन्धायां प्रवृत्तं विस्तरेण रामं निवेदितवान्। रामस्य आशीर्वादं प्राप्य किष्किन्धां प्रत्यागतवान् च।



वर्षाकालस्य यापनार्थं रामः प्रस्रवणगिरेः उपरि स्थितायां गुहायां वसति स्म। गुहातः अनतिदूरे सुन्दरः कासारः आसीत्। गुहाद्वारं च नैर्ऋत्यदिशि आसीत्। अतः वृष्टिबिन्दवः गुहायाः अन्तः न पतन्ति स्म। सशब्दं प्रवहन्ती नदी अपि गुहायाः समीपे आसीत्। किष्किन्धा अपि न अतिदूरे। किष्किन्धायां क्रियमाणः कोलाहलः वाद्यध्वनिः च तत्र श्रूयते स्म।

एवं रमणीये प्रदेशे निवसतः अपि रामस्य मनः विकसितं न आसीत्। सीतां स्मरन् सः सदा खिद्यते स्म। रावणस्य अन्वेषणार्थं मारणार्थं च सुग्रीवस्य साहाय्यं लभ्येत इति चिन्तयन् रामः शरत्कालं प्रतीक्षमाणः आसीत्। दिनानि महता कष्टेन याप्यन्ते स्म रामेण। पक्षिणां कलरवः वा, परिसरस्य शोभा वा, शीतलः वायुः वा रामं न तोषयति स्म।

कथमपि वर्षाकालः अतीतः। कृष्णवर्णीयाः सजलाः मेघाः जलाभावकारणतः श्वेताः जाताः। विमलाः सूर्यकिरणाः भूमिं स्पृशन्तः जनान् तोषयन्ति।

शरत्कालः उपस्थितः चेदपि सुग्रीवः तु सीतान्वेषणे उद्युक्तः नास्ति। राज्यभारं मन्त्रिषु निक्षिप्य निश्चिन्तः सन् सदा अन्तःपुरे एव तिष्ठन् पत्न्या रुमया सह रममाणः अस्ति सः।

सुग्रीवस्य एतम् अनुचितं व्यवहारं जानन् हनूमान् कदाचित् तं दृष्ट्वा उक्तवान्– "एतत् राज्यं, वैभवोपेतं जीवनं च कस्य अनुग्रहात् प्राप्तम् इति स्मरति खलु भवान्? दत्तस्य वचनस्य पालनं कदापि न विस्मरणीयम्। स्वकार्यम् अपि पार्श्वे स्थापयित्वा मित्रस्य कार्यं साधनीयम्। किन्तु भवान् मित्रकार्यं स्वकर्तव्यं च विस्मृत्य अन्तःपुरे भोगे लीनः अस्ति।

सीतान्वेषणप्रयः एतावता एव आरम्भणीयः आसीत् अस्माभिः। रामस्य कोपः सर्वथा दुस्सहः। सौभाग्यवशात् सः इतोऽपि न क्रुद्धः। अतः यावच्छीघ्रम् अस्माभिः सीतान्वेषणार्थं प्रयत्नः आरम्भणीयः'' इति।

तदा सुग्रीवः जागरणं प्राप्य नीलं स्वसमीपम् आहूय आज्ञापितवान्– ''सर्वासु दिक्षु वानरान् प्रेषयतु। पञ्चदशदिनाभ्यन्तरे प्रत्यागत्य तैः वार्ता निवेदनीया इति वदतु। यः विलम्बं करोति सः शूलारोपणेन दण्ड्यते इत्यपि सूचयतु'' इति।

वर्षाकालः अतीतः चेदपि सुग्रीवस्य दर्शनम् एव नास्ति खलु इति सन्तापं खेदं च अनुभवति रामः।

सः लक्ष्मणं स्वसमीपम् आहूय उक्तवान्– ''लक्ष्मण! शरत्काले प्राप्ते सीतायाः अन्वेषणं करिष्यामि इति सुग्रीवेण पूर्वं वचनं दत्तम् आसीत्। किन्तु इदानीं सः अस्मदीये कार्ये उदासीनः इति भाति। यतः तदीयं कार्यं तु सिद्धम् एव। अतः भवान् गत्वा मम असमाधानं निवेद्य तं कर्तव्यं बोधयतु। कीदृशैः वचनैः सः जागरणीयः इति भवान् जानीयात् एव'' इति।

तदा लक्ष्मणः महता कोपेन– ''अग्रज! राज्यप्राप्त्या तृप्तः सः वचनपालनं सर्वथा विस्मृतवान् अस्ति। कस्य अनुग्रहात् सिंहासनं प्राप्तम् इत्यपि तेन विस्मृतम् इति भाति। अतः अहं किष्किन्धां गत्वा सुग्रीवं सिंहासनच्युतं कृत्वा अङ्गदस्य द्वारा सीतान्वेषणं कारयिष्यामि। अनुज्ञां ददातु भवान्'' इति रामम् उक्तवान्।

तदा रामः– ''लक्ष्मण! सहसा किमपि मा करोतु। मम च सुग्रीवस्य च सख्यम् अस्ति इति स्मरतु। तेन अस्मदीये कार्ये विलम्बः कृतः, सत्यम्। किन्तु सः अस्मदीयं कार्यं सर्वथा विस्मृतवान् इति मा भावयतु। प्रथमं तस्य प्रतिक्रिया का इति जानीयाम तावत्। अविवेकः आपदः कारणम्। अतः सावधानतया व्यवहारः करणीयः इदानीम्'' इति उक्तवान्।





# कोपोपशमनम्

कमलेशः कोपशीलः। अल्पस्य कारणस्य निमित्तम् अपि सः कुपितः भवति। सः शान्तिनामिकां कन्यां परिणीतवान्। यदा सा ऐदम्प्राथम्येन पतिगृहम् आगता तदा सर्वे ताम् उक्तवन्तः यत् सर्वप्रथमं दक्षिणपादम् अन्तः स्थापयन्ती प्रवेशं करोतु इति। किन्तु प्रवेशसमये सा प्रमादवशात् वामपादं प्रथमं स्थापयितुम् उद्युक्ता।

एतत् दृष्ट्वा नितरां क्रुद्धः कमलेशः पत्न्याः हस्तं गृहीत्वा बलात् आकृष्य— "एतावन्तः जनाः वदन्तः सन्ति चेदपि न श्रुतं वा भवत्या? वामपादं स्थापयितुम् उद्युक्ता खलु? बुद्धिः अस्ति वा भवत्याः?" इत्येवंरूपेण सम्यक् तर्जितवान्।

एवं शान्ता पत्युः कोपस्य प्रथमं परिचयं प्राप्तवती। द्वित्रेषु दिनेषु एव तया ज्ञातं यत् पतिः शीघ्रकोपी इति। गृहे स्थितेषु पात्रेषु तत्र तत्र असमता वक्रता च दृश्यते स्म। भित्तिषु अपि तत्र तत्र वर्णापगमः, मृत्तिकापगमः, लघुगर्ताः च दृश्यन्ते स्म। काष्ठमयेषु द्वारेषु अपि घट्टनचिह्नानि दृश्यन्ते स्म।

कदाचित् शान्ता एतादृशानि घट्टनचिह्नानि कुतूहलेन परिशीलयन्ती आसीत्। तदा तत्र आगता श्वश्रूः उक्तवती— "यदा यदा पाके अरुचिः अनुभूता तदा भवत्याः पतिमहोदयेन स्थालिका-दर्व्यादयः क्षिप्ताः। अतः एतानि घट्टनचिह्नानि जातानि" इति।

एतानि वचनानि श्रुत्वा षड्वर्षीया तस्याः ननान्दा उच्चैः हसितवती। किन्तु शान्ता न हसितवती। पत्युः कोपः कथञ्चित् निवारणीयः एव इति शान्तायाः इच्छा। अतः सा मृदुभिः वचनैः एव पतिं बोधितवती। कमलेशः सर्वं विना विरोधं श्रुतवान्, किन्तु

परिणामः तु शून्यः एव।

शान्ता उपायचतुरा। बोधनेन विरोधेन वा किमपि प्रयोजनं न भवति इति ज्ञातवती सा। 'पत्युः स्वभावस्य परिवर्तनार्थं कोऽपि उपायः चिन्तनीयः' इति निश्चितवती सा।

'यदा कोपः आगच्छति तदा कमलेशः कटूनि वचनानि वदति स्म। तेन यथा व्यवह्रियते तथैव व्यवहृत्य तस्य कोपः निवारणीयः' इति चिन्तनं कृतवती शान्ता।

कदाचित् कुतश्चित् आगतः कमलेशः गृहस्य अन्तः आगत्य महता कोपेन– "रे, अविलम्बेन गन्तव्यम् अस्ति मया। त्वरया कवलमितम् अन्नम् आनयतु" इति पत्नीम् उक्तवान्।

शान्ता पत्या यथा उक्तं तथैव कवलमितम् अन्नम् आनीय पत्युः पुरतः स्थापितवती। पत्न्याः एतादृशं व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन् कमलेशः तीक्ष्णया दृष्ट्या पत्नीं दृष्टवान्। शान्ता एतत् अविगणयन्ती स्वगतम् इव उक्तवती– "कवलपरिमितेन अन्नेन बुभुक्षा शाम्यति इति मया कथादिषु श्रुतम् आसीत्। किन्तु व्यवहारे अपि तथा भवति इति अद्य मया ज्ञातम्। आश्चर्यकरम् एतत्" इति।

पत्नी बुद्ध्या एवं कुर्वती अस्ति इति चिन्तितवान् आसीत् कमलेशः। तस्याः वचनात् तेन भावितं यत् पत्नी मौग्ध्येन एवं कुर्वती अस्ति इति। 'आकारेण यथा अस्ति तथा नास्ति एषा। मुग्धा मन्दमतिः च एषा' इति चिन्तितवान् सः। एवं चिन्तयतः तस्य



कोपस्य तीव्रता अपगता आसीत्।

एवं त्रिचतुर्वारं प्रवृत्तम्। पुनः अन्यस्मिन् दिने कमलेशः महता कोपेन गृहं प्रविष्टवान्। शान्ता पाकशालायां कार्ये मग्ना आसीत्। पत्नीम् आह्वयन् बहिस्तात् एव कोपेन उक्तवान् कमलेशः– "अये, आपणतः वस्तूनि आनेतव्यानि खलु? स्यूतं धनं च अत्र क्षिपतु तावत्" इति।

शान्ता स्यूतं धनं च आनीय कमलेशम् उद्दिश्य क्षिप्तवती। "अये, किम् एतत्?" इति कोपेन पृष्टवान् कमलेशः।

"अहं किं जानामि? भवता यथा उक्तं तथा कृतं मया। पत्युः वचनम् अक्षरशः पालनीयम् इति मातापितृभ्याम् अहं बोधिता अस्मि। वस्तूनाम् आनयनसन्दर्भे स्यूतस्य धनस्य च क्षेपणम् एतस्य गृहस्य सम्प्रदायः स्यात् इति चिन्तितं मया। अतः एव भवता यथा उक्तं तथा कृतम्" इति उक्तवती शान्ता। एतस्य प्रतिवचनं किं वक्तव्यम् इति अजानन् कमलेशः मौनं स्थितवान्।

पुनः कदाचित् गृहसदस्याः सर्वे बन्धुविवाहनिमित्तं पार्श्वग्रामं गतवन्तः आसन्। गृहे शान्ता कमलेशः च आस्ताम्। पाकशालासमीपे स्थापितं तण्डुलोदकपात्रं पूर्णम् आसीत्। अनतिदूरे वृक्षस्य अधः धेन्वाः पुरतः स्थापिते पात्रे तत् स्थापयितुं शान्ता नीतवती। किन्तु धेन्वा पूर्वदिने स्थापितं तण्डुलोदकम् एव न पीतम् आसीत्। अतः तत् पात्रं रिक्तं न आसीत्। शान्ता तण्डुलोदकं क्षेप्तुं न इच्छति। निम्बवृक्षस्य अधः योगासनं



कुर्वन्तं पतिं पृष्टवती सा– "धेन्वा ह्यस्तनं तण्डुलोदकम् एव न पीतम्। अतः अद्यतनं तण्डुलोदकं किं करोमि?" इति।

पद्मासने उपविष्टः कमलेशः पत्नीं तीक्ष्णया दृष्ट्या पश्यन् कोपेन– "मम शिरसि पातयतु तर्हि" इति उक्तवान्।

शान्ता तत्क्षणे एव तण्डलोदकं कमलेशस्य उपरि पातितवती एव। पत्नीम् आश्चर्येण क्रोधेन च पश्यन् उत्थितः कमलेशः तां कपोले ताडितवान्।

अनन्तरं क्रोधेन ताम् उक्तवान् सः– "किम् इदं कृतं भवत्या? एतस्मिन् वयसि अपि किं करणीयं किं न करणीयम् इति विवेकः नास्ति खलु भवत्याः" इति।

शान्ता अश्रूणि स्रावयन्ती– "भवता यथा उक्तं तथा कृतं मया। तण्डुलोदकस्नानम् आरोग्याय इति भावयन् भवान् तथा उक्तवान् स्यात् इति चिन्तयित्वा अहम् एवं कृतवती। यदि एतत् अनुचितं तर्हि विवेकिना भवता किमर्थम् उक्तम्?" इति उक्तवती।

एतत् श्रुत्वा चिन्ताक्रान्तः सन् कमलेशः हस्ताभ्यां शिरः गृहीत्वा उपविष्टवान्। शान्ता प्रोञ्छम् आनीय पत्युः शरीरं मार्जयन्ती "मया कृतं यदि अनुचितं तर्हि अहं क्षन्तव्या" इति प्रार्थितवती।

मौनम् उपविष्टः कमलेशः पत्न्याः मौग्ध्यविषये चिन्तयन् अस्ति। पूर्वं प्रवृत्ताः घटनाः तेन स्मृताः। 'एतासु घटनासु मम कोपस्य अपि पात्रम् आसीत्। मम कोपः एव एतादृशघटनानां मूलम्' इति ज्ञातवान् सः।

एतेन कमलेशे विवेकः जागरितः अभवत्। यदा कोपप्रसङ्गः आगच्छति तदा पूर्वतनघटनाः स्मरन् सः झटिति कोपम् उपसंहरति। शान्ततया स्थातुं बहुधा प्रयत्नं करोति सः।

शान्तया अपि पत्युः एषः प्रयत्नः लक्षितः एव। सा पत्युः अनुकूलतया व्यवहरन्ती खेदप्रसङ्गः यथा न उद्भवेत् तथा व्यवहरति। कालान्तरे कमलेशस्य कोपः सर्वथा शान्तः। सः शान्तः विवेकी च जातः।





# सुवर्णमूषकः

प्रतिष्ठाननामके देशे आदर्शपुरं नाम नगरम्। तस्मिन् नगरे माधवी नाम विधवा निवसति स्म। यदा तस्याः पतिः मृतः आसीत् तदा दायादाः तस्याः सम्पत्तिं वशीकृतवन्तः आसन्। पत्युः मरणसमये सा गर्भवती आसीत्। नवमे मासे सा पुत्रं प्रसूतवती। महता कष्टेन पुत्रं पोषितवती च। इदानीं पुत्रः प्राप्तवयस्कः अस्ति।

कदाचित् माधवी पुत्रम् आहूय उक्तवती – "वत्स, भवान् वणिजः पुत्रः। वाणिज्यं तु परम्परया अनुवर्तेत। किन्तु दौर्भाग्यवशात् भवान् सर्वथा निर्धनः। एतस्मिन् एव नगरे धनगुप्तः नाम कोट्यधीशः अस्ति। निर्धनानां वणिक्पुत्राणां साहाय्यं करोति सः इति श्रूयते। अतः भवान् तं दृष्ट्वा वाणिज्यार्थं किञ्चित् मूलधनं प्रार्थयतु" इति।

मातुः सूचनाम् अङ्गीकुर्वन् वणिक्पुत्रः धनगुप्तं द्रष्टुं निर्गतः। यदा सः धनगुप्तस्य समीपं गतः तदा धनगुप्तः अन्यं कञ्चित् युवकं तर्जयन् आसीत् – "वाणिज्यदक्षता किञ्चित् अपि भवति न दृश्यते। बहुवारं मया धनसाहाय्यं कृतम्। तस्य आधारेण लाभप्राप्तिः दूरे तिष्ठतु, मूलधनम् अपि व्ययीकृत्य आगतं भवता। यदि बुद्धिमत्ता स्यात् तर्हि कश्चित् मृतं मूषकम् अपि मूलधनत्वेन उपयुज्य लक्षशः रूप्यकाणि सम्पादयितुम् अर्हति" इति।

एतत्सर्वं दूरात् सम्यक् श्रुतवान् वणिक्पुत्रः। सः पुनः अग्रे न गतवान्। तत्रैव समीपे पतितः मृतः कश्चन मूषकः दृष्टः तेन। तं मृतमूषकं स्वीकृत्य ततः निर्गतवान् सः। समीपे एव कस्यचित् आपणस्य पुरतः कश्चन दुर्बलः मार्जारः तेन दृष्टः। वणिक्पुत्रः तस्मै तं मृतं मूषकं दत्तवान्। तस्य खादनेन मार्जारः

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

सन्तुष्टः जातः। वणिक्पुत्रस्य प्राणिदयया सन्तुष्टः सः आपणिकः चणकान् दत्तवान्। वणिक्पुत्रः तान् भर्जयित्वा उपस्करं योजितवान्। अनन्तरं शीतलं जलम् अपि स्वीकृत्य नगरात् बहिः मार्गस्य पार्श्वे छायायुक्तस्य वृक्षस्य अधः उपविष्टवान्।

ग्रीष्मकालः सः। मध्याह्ने घोरः आतपः। काष्ठसङ्ग्रहं कृत्वा अरण्यतः आगच्छन्तः काष्ठविक्रेतारः तस्य वृक्षस्य अधः विश्रान्त्यर्थम् उपविशन्ति स्म। वणिक्पुत्रः तेभ्यः उपस्करयुक्तान् चणकान्, शीतलं जलं च दत्तवान्। एतेन सन्तुष्टेषु तेषु काष्ठविक्रेतृषु एकैकः अपि वणिक्पुत्राय द्वित्राणि काष्ठानि दत्त्वा गतवान्।

एवं प्राप्तानि काष्ठानि सङ्गृह्य बद्ध्वा नीत्वा विक्रीतवान् वणिक्पुत्रः। तेन प्राप्तेन धनेन चणकान् क्रीत्वा उपस्करं योजयित्वा, शीतलजलेन सह काष्ठसङ्ग्रहीतृभ्यः कानिचन दिनानि दत्तवान्। एवं किञ्चित् धनं सङ्गृह्य तेन काष्ठानि क्रीत्वा गृहे सङ्गृहीतवान्। तावता वृष्टिकालः आसन्नः। काष्ठस्य मूल्यं प्रवृद्धम्। अतः अधिकेन मूल्येन आत्मना सङ्गृहीतानि काष्ठानि विक्रीतवान् वणिक्पुत्रः। विक्रयणात् प्राप्तेन धनेन स्वकीयम् एकम् आपणम् आरब्धवान् सः।

सौभाग्यवशात् तेन वाणिज्यतः विशेषतः लाभः प्राप्तः। वणिक्पुत्रः वाणिज्यं विस्तारितवान्। एवम् अल्पे एव काले सः कश्चन महावणिक् जातः। केषुचित् एव वर्षेषु सः लक्षाधीशः जातः।

कदाचित् सः एकं सुवर्णमयं मूषकं कारयित्वा धनगुप्तस्य गृहं गतवान्। धनगुप्ताय तं सुवर्णमूषकं दत्त्वा– "श्रीमन्, भवता यत् मूलधनं दत्तं तत् वृद्धिसहितं प्रत्यर्पयन् अस्मि" इति उक्त्वा पूर्वतनघटनां विस्तरेण निवेदितवान्।

एतत्सर्वं श्रुत्वा धनगुप्तः नितरां सन्तुष्टः। तस्मै स्वस्य एकमात्रपुत्रीं दत्तवान् सः। विवाहसमये यौतकरूपेण सुवर्णमूषकः एव समर्पितः धनगुप्तेन।





# चीनांशुकम्

द्वित्रसहस्रवर्षेभ्यः पूर्वं चीनादेशे कश्चन राजा आसीत्। तस्य पत्न्याः नाम चीलिंगुषी इति। सा परमसुन्दरी। विवाहसमये तस्याः वयः चतुर्दश वर्षाणि।

महाराज्ञी सर्वदा सन्तोषेण तिष्ठेत् इति महाराजस्य आशयः। अतः एव अन्तःपुरं रमणीयतया अलङ्कृतम् आसीत् तेन। अन्तःपुरं परितः परमरमणीयम् उद्यानं निर्मितम् आसीत्। तस्याः तोषणार्थं गायकाः नर्तकाश्चापि नियोजिताः आसन्।

एवं सकलसौभाग्यम् अस्ति चेदपि राज्ञ्याः मनः खिन्नम् एव तिष्ठति। तस्याः मुखे न हासः, व्यवहारे न उत्साहः। तत्र कारणम् अपि अस्ति। ऐदम्प्राथम्येन सा मातापितरौ बान्धवान् च परित्यज्य दूरे अदृष्टपूर्वे परिसरे तिष्ठन्ती अस्ति। अतः सा मातापितरौ, सखीः, जन्मगृहं च पुनः पुनः स्मरन्ती खेदेन निःश्वसिति।

राज्ञ्याः कान्तिरहितं मुखं पश्यतः महाराजस्य महती चिन्ता। तस्याः चिन्तायाः निवारणार्थं सः कदाचित् तया सह उद्यानं गतवान्। कस्यचित् पिप्पलीवृक्षस्य अधः उपविश्य प्रीत्या तां पृष्टवान्– "देवि! का चिन्ता भवत्याः? किं स्वास्थ्यं सम्यक् नास्ति? काऽपि न्यूनता अनुभूयते वा अत्र?" इति।

तदा चीलिंगुषी उक्तवती– "स्वामिन्! अत्र न काऽपि न्यूनता। अस्वास्थ्यम् अपि नास्ति मम। किन्तु केनापि कारणेन मनसि उल्लासः एव न दृश्यते, तावदेव" इति।

तया सह किञ्चित्कालं स्थित्वा राजा मन्त्रिणां समीपं गत्वा आज्ञास्वरेण उक्तवान्– "महाराज्ञ्याः मनः उल्लसितं यथा स्यात् तथा कर्तुं कः उपायः इति आलोच्य मां निवेदयन्तु" इति।

"चीनादेशीया जानपदकथा"



महाराजस्य निर्गमनस्य अनन्तरं परिचारिकाः चायपात्रम् आनीय तस्याः पुरतः स्थापितवत्यः। सम्प्रदायानुगुणं राज्ञी गायकेभ्यः नर्तकेभ्यः च चायपानीयं सज्जीकृत्य दत्तवती। अनन्तरं स्वनिमित्तम् अपि चषकमितं चायपानीयं सज्जीकृतवती।

तत्समये काचित् घटना प्रवृत्ता। वृक्षात् कश्चन कीटकोषः राज्ञ्याः चायचषके पतितः। पानीयबिन्दवः केचन राज्ञ्याः वस्त्रेषु अपि पतिताः। परिचारिकाः धावन्त्यः समीपम् आगतवत्यः।

"मम वस्त्रस्य किमपि न जातम्। पानीये किं पतितम् इति पश्यन्तु" इति उक्तवती राज्ञी।

परिचारिकाः चायपानीये पतितम् उन्नीय प्रदर्शितवत्यः। तन्तूनां पिण्डम् इव दृश्यते स्म तत्। राज्ञी तत् आसक्त्या दृष्टवती।

वस्तुतः प्रवृत्तं तु एवम्। पिप्पलीवृक्षस्य अधः उपविष्टवती आसीत् खलु सा? पिप्पलीवृक्षे कौशेयकीटानां कोषाः आसन्। तादृशः कश्चन कोषः अकस्मात् राज्ञ्याः पानीयपात्रे पतितः। उष्णताकारणतः कोषस्थाः तन्तवः स्पष्टतां गताः।

राज्ञी कुतूहलेन कोषस्य एकं तन्तुम् आकृष्टवती। सूक्ष्मः चाकचक्ययुक्तः च अस्ति सः। झटिति भग्नः अपि न भवति। एकस्मिन् कोषे एकः एव अखण्डः तन्तुः। राज्ञी परिचारिकां काञ्चित् उक्तवती यत् शलाकायाम् एतं तन्तुं वेष्टयतु इति। परिचारिका तथैव कृतवती।

'सुन्दरः दृढतरः च तन्तुः एषः। वस्त्रनिर्माणार्थं यावत् आवश्यकं तावत् तन्तुः यदि लभ्येत, तेन यदि वस्त्रं निर्मीयेत तर्हि कथं भवेत्? रमणीयं वस्त्रं सिद्धं स्यात्' इति आलोचितवती राज्ञी उत्साहेन सखीः आज्ञापितवती– "भवत्यः वृक्षे स्थितान् एतादृशान् कोषान् सङ्गृह्य उष्णे चायपानीये पातयन्तु" इति।

तत्क्षणे एव सर्वाः कौशेयकीटानां कोषाणां सङ्ग्रहणे उद्युक्ताः जाताः। पूर्वं राज्ञी क्षणं युगमिव भावयति स्म। इदानीं तु तस्याः युगं क्षणायते। महता उत्साहेन व्यवहरन्ती सा

परिचारिकाणां कार्यं परिशीलयन्ती अस्ति। सायङ्कालाभ्यन्तरे तन्तूनां केचन समूहाः सिद्धाः। राज्ञी तक्षकान् आहूय आज्ञापितवती– "प्रातःकालाभ्यन्तरे उत्तमः वेमा निर्मातव्यः भवद्भिः। किन्तु एवं निर्माणं रहसि प्रचलेत्" इति।

अनन्तरदिने राजा मन्त्रिणः आहूय पृष्टवान्– "राज्ञ्याः तोषणार्थं भवद्भिः कः उपायः चिन्तितः?" इति।

"प्रभो, सुन्दरी काचित् मयूरी उद्याने स्थापिता चेत् मयूर्याः लास्यं पश्यन्ती राज्ञी सन्तोषम् अनुभवेत्" इति सूचितवान् कश्चन मन्त्री।

एषः उपायः राज्ञे न तथा अरोचत। सः असमाधानेन मन्त्रिणः दृष्टवान्। मन्त्रिणः राज्ञः आशयं जानन्तः लज्जया शिरः अवनमय्य ततः निर्गतवन्तः। 'राज्ञीम् अत्र आनयन्तु' इति भटान् आज्ञापितवान् राजा।

अन्तःपुरं गत्वा प्रत्यागतः कश्चन भटः राजानं निवेदितवान्– "प्रभो, राज्ञी प्रकोष्ठात् इतोऽपि बहिः न आगता इति श्रूयते" इति।

"सूर्योदयः जातः चेदपि राज्ञी प्रकोष्ठात् बहिः न आगता? किं सा अस्वस्था, उत नितरां खिन्ना?" इति स्वगतं वदन् राजा उद्वेगेन अन्तःपुरं गतवान्। प्रकोष्ठे यत् प्रचलति तत् दृष्ट्वा राजा आश्चर्यचकितः!

'या ह्यः चिन्तासागरे निमग्ना सती अश्रूणि



स्रावयन्ती आसीत् सा राज्ञी किम् एषा एव? सुन्दरैः तन्तुभिः परमरमणीयं वस्त्रं वयन्ती अस्ति एषा! श्रमम् अपि अविगणय्य कार्यरता दृश्यते। मुखे अपूर्वः हासः उत्साहः च' इति आलोचयन् राजा राज्ञ्याः कार्यं निर्निमेषं पश्यन् स्थितवान्।

राज्ञः आगमनं ज्ञात्वा राज्ञी शिरः उन्नीय दृष्टवती। तस्याः नेत्रे आनन्दातिरेकेण प्रकाशेते। तृप्तिसूचकः मन्दहासः मुखे विलसति।

"प्रभो, अद्यावधि चिन्तालीना अहं भवन्तं नितरां खेदितवती स्याम्। तस्य दोषस्य निवारणार्थम् एकम् अपूर्वं वस्त्रं प्रवाय अर्पयितुम् उद्युक्ता अस्मि। मम व्यवहारात्

कुपितः तु नास्ति खलु भवान्?" इति मधुरस्वरेण पृष्टवती राज्ञी।

"कोपः किमर्थं मम? नितरां सन्तुष्टः अस्मि इदानीम्। अपूर्वम् उपायनं प्राप्यते इत्यनेन तु द्विगुणितः सन्तोषः मम" इति हसन् उक्तवान् राजा।

राज्ञी प्रवृत्तं समग्रं विस्तरेण निवेद्य– "राज्ञी सती अहं वयनकार्ये उद्युक्ता यत् तदर्थं खिन्नः भवान् माम् एतस्मात् प्रयत्नात् निवारयेत् इति आलोच्य सर्वं रहसि एव कृतवती" इति उक्तवती राज्ञी।

"भवत्यै यत् यथा रोचते, तत् तथा करोतु। भवत्याः सन्तोषार्थम् अहं सर्वस्वम् अपि त्यक्तुं सिद्धः एव। एवं स्थिते अल्पेन केनचित् कार्येण यदि भवत्याः सन्तोषः स्यात् तर्हि तत् ममापि अनुमतम् एव" इति उक्तवान् राजा।

"प्रभो, मम अन्या काचित् अपेक्षा अस्ति। पूरयिष्यति वा भवान्?" इति पृष्टवती राज्ञी।

"अवश्यं पूरयिष्यामि। का सा अपेक्षा इति वदतु तावत्" इति उक्तवान् राजा।

"पिप्पलीवनम् एव निर्मातव्यम् इति मम इच्छा। तस्मिन् वने सहस्राधिकाः पिप्पलीवृक्षाः स्युः" इति निवेदितवती राज्ञी।

"एतावदेव खलु? अद्यैव कार्यस्य आरम्भं कारयिष्यामि। इष्टं सिद्धं भावयतु भवती" इति उक्तवान् राजा।

एवं प्रपञ्चे सर्वप्रथमं कौशेयवस्त्रं निर्मितवती आसीत् राज्ञी चीलिंगुषी। एतदनन्तरकाले चीनादेशीयाः राज्ञ्यः चीलिंगुषीस्थापितं सम्प्रदायम् अनुसरन्त्यः वर्षे एकस्मिन् दिने कौशेयकीटैः आहारं खादयन्ति स्म।

कालान्तरे कौशेयवस्त्राणि अन्येषु देशेषु अपि प्रसृतानि। चीनादेशे एतत् वस्त्रं सर्वप्रथमं निर्मितम् इत्यतः उत्तमस्य कौशेयवस्त्रस्य 'चीनांशुकम्' इत्यपि नाम। यद्यपि अन्येषु अपि देशेषु कौशेयवस्त्राणि निर्मीयन्ते तथापि चीनादेशे निर्मितानां कौशेयवस्त्राणां प्रसिद्धिः वैशिष्ट्यं च अद्यापि अक्षतं तिष्ठति।



भूमेः ६०,२०,००० चतुरस्रमैलपरिमितः भागः हिमेन आवृतः इति श्रूयते।
तन्नाम १०.४% भागः हिमावृतः इति वक्तुं शक्यते।






## सर्पभक्षी पक्षी

'आफ्रिकन्सेक्रेटरी' नाम कश्चन पक्षी भूमौ सञ्चरन् सर्पान् मारयित्वा खादति इति श्रूयते। एषः पक्षी सामान्यान् सर्पान् पादाभ्यां गृहीत्वा मर्दयित्वा खादति।

## गभीरं सरोवरम्



सोवियत्रशियादेशे सैबीरियाप्रदेशे स्थितं 'बेकाल्'नामकं सरोवरं प्रपञ्चस्तरे एव अतिगभीरम्। एतस्य गभीरता ४,७८२ द्वादशाङ्गुलमिता इति श्रूयते।

# भवद्भिः सह न आगमिष्यामि

| | |
|---|---|
| पिता - विरामप्रार्थनापत्रं मुख्याध्यापकाय दत्तवान् वा? | You have submitted the leave application to the Headmaster, have you? |
| पुत्रः - न, न दत्तवान्। | No, I haven't. |
| पि - किमर्थम्? ह्यः एव अहं लिखित्वा दत्तवान् आसं खलु? | Why? I wrote it out and gave it to you yesterday itself? |
| पु - भवद्भिः सह ग्रामं प्रति आगमनविषये इदानीं मम सन्देहः। | I had doubts about my accompanying you to the village. |
| पि - किमर्थं तथा? परह्यः भवान् एव खलु स्वयम् उत्साहेन माम् उक्तवान्– अहम् अपि आगमिष्यामि इति? | What is the matter? You were so enthusiastic about it day before yesterday when you said you would be going with me, weren't you? |
| पु - तदानीं तु ग्रामदर्शनकुतूहलं केवलं मनसि आसीत्? | Yes, I had great interest then in seeing the village. |
| पि - इदानीम्? | But now? |
| पु - इदानीं पाठविषये चिन्तयन् अस्मि। सर्वे अध्यापकाः विशेषकक्ष्यां स्वीकुर्वन्तः सन्ति। अतः पाठस्य त्यागेन हानिः एव स्यात्। | Now I am thinking of my lessons. The teachers are taking special classes and I will be the loser if I miss them. |
| पि - भवान् यथा इच्छति तथा करोतु। किन्तु भवता एकाकिना अत्र स्थातव्यम्। पाकः अपि स्वयं करणीयः भविष्यति। | Do as you like. But you would be alone here; you have to cook for yourself. |
| पु - चिन्ता नास्ति। एकाकितया तिष्ठामि चेत् पठने सौलभ्यम् एव। पाके मम न तथा क्लेशः। | No problem. If I am alone that would help me in my studies. I have no diffculty in cooking. |
| पि - अस्तु तर्हि। भवन्निमित्तम् आरक्षणं न क्रियते। | O.K. then. I will not make any reservation for you. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां मार्च्-९१ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **निरतो भवेदयं देशरक्षणे।**

द्वितीयचित्रम् - **विरतो भवतु भोः, चौर्यसाहसात्।**

प्रेषिका - को. मैथिली, ७, सिंहपेरुमालुदक्षिणवीथी, वेण्णारतीरम्, तञ्जापुरी-६१३००३




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अनुरूपम् - | Matching |
| इतिवृत्तम् - | Report |
| उपस्करः - | Condiment |
| कवलम् - | Morsel (of food) |
| कोटरः - | Hollow |
| कौशेयवस्त्रम् - | Silk cloth |
| गण्डः - | Swelling |
| गभीरता - | Depth |
| गुञ्जति - | Buzz |
| चणकः - | Bengal gram |
| चषकः - | Tumbler |
| चोलवस्त्रम् - | Blouse piece |
| जनसम्मर्दः - | Crowd |
| तक्षकः - | Carpenter |
| तन्तुः - | Thread |
| तन्तुवायः - | Weaver |
| तर्जनी - | Forefinger |
| तान्त्रिकता - | Technology |
| धारणा - | Stand (N) |
| पिप्पलीवृक्षः - | A certain kind of tree. |
| पृष्ठभूमिका - | Background |
| पौनःपुन्येन - | Again and again |
| प्रवाय - | Having woven |
| प्रोञ्छः - | Bath towel |
| बधिरः - | Deaf |
| भूपटः - | Map |
| मकरः - | Crocodile |
| मधुपः - | Bumble bee |
| मूलधनम् - | Capital investment |
| मौग्ध्यम् - | Innocence |
| यन्त्रागारम् - | Factory |
| यातायातम् - | Traffic |
| यौतकम् - | Gift given to a woman at her marriage |
| वपति - | Sows |
| वयनम् - | Weaving |
| विन्यासः - | Design |
| वेमा - | Loom |
| वेष्टयतु - | Twine round |
| शाटिका - | Saree |
| सोढम् - | Was borne |
| सान्निध्यम् - | Presence |

# Vital tips for colouring

Luxor Bambino colour set
An adventure with colours.



Luxor Mickey Mouse Colours
Enter the fairyland of colours.



Luxor Colour Pens
Sing a rainbow, paint a song




Luxor Disney fun set
For fun, frolic and fantasy.







Disney Inoxcolor Plastic Crayons
Colourful times ahead.




Luxor Sign Pen
To make your little dreams come true.




Donald Duck Magic Colours
For the magician in you.

© THE WALT DISNEY CO.

CLARION D 254 R

Bestsellers
PENNED BY LUXOR





LUXOR PEN CO., 229, Okhla Industrial Estate,
Phase III, New Delhi-110020, India.
Tel: 633318, 6833372, 6835607. Tlx: 031-75069
SIGN IN. Fax: 011 6847602. Tel: Delhi (Sales):
522956, Bombay: 6730251, Calcutta: 250407

